अमी पानकरंकाभाः सप्तापि जलराशयः।
यद्यशोराजहंसस्य पञ्जरं भुवनत्रयम्॥ १२६॥
सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः॥ १२७॥
भयमेकमनेकेभ्यः शत्रुभ्यो विधिवत्सदा। 5
ददासि तच्च ते नास्ति राजन् चित्रमिदं महत्॥ १२८॥

इति श्लोकैर्गुरुश्लोकः स्तुतो राजा तमब्रवीत्[1]। यत्र त्वं सा सभा धन्याऽवस्थेयं तन्ममान्तिके॥ १२९॥
इति राज्ञा ससन्मानमुक्तोऽभ्यर्णे स्थितो यदा। तेन साकं ययौ दक्षः स कुडंगेश्वरे कृती॥ १३०॥
व्यावृत्य द्वारतस्तस्य पश्चादागच्छतः सतः। प्रभः कुतोऽन्यदा राज्ञा देवे[2]ऽवज्ञां करोषि किम्॥ १३१॥
नतिं किं न विधत्से च सोऽवादीद् भूपते! शृणु। महापुण्यस्य पुंसस्ते पुर एवोच्यते मया॥ १३२॥ 10
जल्पितात् प्राकृतैः सार्द्धं कः शोषयति थूत्कृतम्। असहिष्णुः प्रणामं मेऽसकौ कुर्वे ततः कथम्॥१३३॥
ये मत्प्रणामसोढारस्ते देवा अपरे ननु। किं भावि?, प्रणम त्वं द्राक्, प्राह राजेति कौतुकी॥ १३४॥
देवान्निजप्रणम्यांश्च दर्शय त्वं वदन्निति। भूपतिर्जल्पितस्तेनोत्पाते दोषो न मे नृप!॥ १३५॥
राजाह देशान्तरिणो भवन्त्यद्भुतवादिनः। देवाः किं धातुभृद्देहिप्रणामेऽप्यक्षमा [3]ऋषे!॥ १३६॥
श्रुत्वेति पुनरासीनः शिवलिङ्गस्य स प्रभुः। उदाजह्रे स्तुतिश्लोकान् तारस्वरकरस्तदा॥ १३७॥ 15

तथाहि–

प्रकाशितं त्वयैकेन यथा सम्यग्जगत्त्रयम्।
समस्तैरपि नो नाथ परतीर्थाधिपैस्तथा॥ १३८॥
विद्योतयति वा लोकं यथैकोऽपि निशाकरः।
समुद्गतः समग्रोऽपि तथा किं तारकागणः॥ १३९॥ 20
त्वद्वाक्यतोऽपि केषांचिदबोध इति मेऽद्भुतम्।
भानोर्मरीचयः कस्य नाम नालोकहेतवः॥ १४०॥
नो वाद्भुतमुलूकस्य प्रकृत्या क्लिष्टचेतसः।
स्वच्छा अपि तमस्त्वेन भासन्ते भास्वतः कराः॥ १४१॥–इत्यादि।

तथा– 25

न्यायावतारसूत्रं च श्रीवीरस्तुतिमप्यथ। द्वात्रिंशच्छ्लोकमानाश्च त्रिंशदन्याः स्तुतीरपि॥ १४२॥
ततश्चतुश्चत्वारिंशद्वृत्तां स्तुतिमसौ जगौ। 'कल्याणमन्दिरे'त्यादिविख्यातां जिनशासने॥ १४३॥
अस्य चैकादशं वृत्तं पठतोऽस्य समाययौ। धरणेंद्रो दृढा भक्तिर्न साध्यं तादृशां किमु॥ १४४॥
शिवलिंगात् ततो धूमस्तत्प्रभावेण निर्ययौ। यथान्धतमसस्तोमैर्मध्याह्नेऽपि निशाऽभवन्॥ १४५॥
यथा विह्वलितो लोको नंष्टुमिच्छन् दिशो नहि। अज्ञासीदाश्मनस्तम्भभित्तिष्वास्फालितो भृशम्॥१४६॥ 30
ततस्तत्कृपयेवास्माद् ज्वालामाला विनिर्ययौ। मन्येसंमुद्रमावर्त्तावृत्तिसंवर्त्तकोपमा॥ १४७॥
ततश्च कौस्तुभस्येव पुरुषोत्तमहृत्स्थितेः। प्रभोः श्रीपार्श्वनाथस्य प्रतिमा प्रकटाऽभवत्॥ १४८॥

---

1 N तमस्तवीत्। 2 N देवावज्ञां। 3 A अमी।

ततः परमया भक्त्या स्तुत्वा माथं प्रणम्य च । मुक्तात्मानो ह्यमी देवा मत्प्रणामं सहिष्णवः ॥ १४९ ॥
प्रतिबोध्येति तं भूपं शासनस्य प्रभावना ।
व्यधीयत **विशालायां** प्रवेशायुत्सवात् पुरि ॥ १५० ॥-युग्मम् ।
वत्सराणि ततः पंच संघोऽमुष्य मुमोच च । चक्रे च प्रकटं श्रीमत्**सिद्धसेनदिवाकरम्** ॥ १५१ ॥
शिवलिङ्गादुदैवात्र कियत्कालं फणावलिः । लोकोऽघर्षश्च तां पश्चान्मिथ्यात्वदृढरङ्गभूः* ॥ १५२ ॥
एकदाऽपृच्छय राजानं बलादप्रतिबद्धधीः । विजहार प्रभुस्तस्मात् संघकासारवारिजम् ॥ १५३ ॥
§७. गीतार्थैर्यतिभिः सार्द्धं दक्षिणस्यां स सञ्चरन् । **भृगुकच्छ**पुरोपान्ते प्रदेशभुवमाप सः ॥ १५४ ॥
तत्रासन्नतर[1]ग्रामगोव्रजारक्षकास्तदा । सूरेः संमिलितास्तत्र धर्मश्रवणसस्पृहाः ॥ १५५ ॥
कुत्राप्यवस्थिता[2]नस्मान् यूयं प्रश्रयत स्थिरम्[3] । मार्गश्रमश्रमायस्ताः किं ब्रूमः कल्मषापहम् ॥ १५६ ॥
ते प्रोचुरामहादत्र तरुच्छायासु विश्रमम् । विधाय धर्मं व्याख्यात[4] दास्यामो गोरसानि वः[5] ॥ १५७ ॥
सूरयस्तत्सदभ्यस्तगीतहुंबडकैस्तदा । भ्रान्त्वा भ्रान्त्वा ददानाश्च तालमेलेन[6] तालिकाः ॥ १५८ ॥
प्राकृतोपनिबन्धेन सद्यः सम्पाद्य रासकम् । ऊचुस्तत्प्रतिबोधार्थं तादृशामीदृगौचिती ॥ १५९ ॥

तथाहि—

**नवि मारिअइ नवि चोरिअइ पर-दारह अत्थु[7] निवारिअइ ।**
**थोवाह वि थोवं[8] दाइअइ[9] तउ सग्गि टुगुट्टगु[10] जाइयइ ॥ १६० ॥**

तद्वाग्भिः प्रतिबुद्धास्ते तत्र ग्रामं न्यवेशयन् । धनधान्यादिसम्पूर्णं तत् **तालारासका**भिधम्[11] ॥ १६१ ॥
अस्थापयंश्च तत्र श्रीनाभेयप्रतिमान्वितम् । अभ्रंलिहं जिनाधीशमन्दिरं सूरयस्तदा ॥ १६२ ॥
अचलस्थापनं तच्च तत्राद्यापि प्रणम्यते । भव्यैस्तादृक् प्रतिष्ठा हि शक्रेणापि न चाल्यते ॥ १६३ ॥
§८. एवं प्रभावनां तत्र कृत्वा **भृगुपुरं** ययुः । तत्र श्री**बलमित्र**स्य पुत्रो राजा **धनंजयः** ॥ १६४ ॥
भक्त्या चाभ्यर्हितास्तेनान्यदासावरिभिर्वृतः । अवेष्ट्यत पुरं चैभिरमर्यादाम्बुधिप्रभैः ॥ १६५ ॥
भीतः स चाल्पसैन्यत्वात् प्रभुं शरणमाश्रयत् । तैलकूपे[12]ऽभिमंत्र्यासौ सर्षपप्रस्थमक्षिपत् ॥ १६६ ॥
ते सर्षपा [13]भटीभूयासंख्याः कूपाद् विनिर्ययुः । तैः शत्रूणां बले [14]भग्ने हतास्ते परिपन्थिनः ॥ १६७ ॥
**सिद्धसेन** इति श्रेष्ठा तस्यासीत् सान्वयाऽभिधा । राजा तु तत्र वैराग्यात् तत्पार्श्वे व्रतमग्रहीत् ॥ १६८ ॥
एवं प्रभावनास्तत्र कुर्वतो **दक्षिणापथे** । **प्रतिष्ठानपुरं** प्रापुः प्राप्तरेखाः कविव्रजे ॥ १६९ ॥
आयुःक्षयं परिज्ञाय तत्र प्रायोपवेशनात् । योग्यं शिष्यं पदे न्यस्य **सिद्धसेनदिवाकरः** ॥ १७० ॥
दिवं जगाम संघस्य ददानोऽनाथतान्यथाम् । तादृशां विरहे को न दुःखी यदि सचेतनः ॥ १७१ ॥
वैतालिको **विशालायां** ययौ कश्चित्ततः पुरात् ।
**सिद्धश्री**त्यभिधानाया मिलितोऽसौ [15]प्रभुस्वसुः ॥ १७२ ॥
तत्राह स निरानन्दं पदद्वयमनुष्टुभः । उत्तरार्धं च सावादीत् स्वमतेरनुमानतः ॥ १७३ ॥

---

* 'शवलिंगादुदैवात्र कियत्कालार्चितं बलिः । लोकोऽव्यर्थकृतां पश्चान्मिथ्यात्वदृढरंगभूत् ।' B आदर्शे एतादृशोऽयं भ्रष्टपाठात्मकः श्लोको विद्यते ।

1 B आसन्नगर° । 2 A B N कुत्राप्यविस्मितान् । 3 N प्रश्नयतश्चिरम् । 4 N धर्मंव्याख्यानं । 5 A गोरसानिव; B गोरसाभिव । 6 N तालमानेन । 7 N संगु । 8 B थोवूं । 9 B दाईयइ; C दावियइ; N दाअइ । 10 N वसणिदुगुदुगु° । 11 N ताल्ररासिकाभिधः । 12 A तैलं कूपे; C तैलकूप्ये । 13 N नरीभूया° । 14 N बलं भग्नं । 15 B N प्रभोः ।

तथाहि—

स्फुरन्ति वादिखद्योताः साम्प्रतं दक्षिणापथे ।
नूनमस्तंगतो वादी सिद्धसेनो दिवाकरः ॥ १७४ ॥

सापि सापायतां काये विमृश्यानशनं व्यधात् । गीतार्थविहिताराधनयासौ सद्गतिं ययौ ॥ १७५ ॥
प्रभोः श्रीपादलिप्तस्य वृद्धवादिगुरोस्तथा । श्रीविद्याधरवंश्यत्व[1]निर्यामक[2]मिहोच्यते ॥ १७६ ॥ 5
संवत्सरशते पञ्चाशता श्रीविक्रमार्कतः । साग्रे [3]जाकुटिनोद्धारे श्राद्धेन विहिते सति ॥ १७७ ॥
श्रीरैवताद्रिमूर्धन्यश्रीनेमिभवनस्य च । वर्षान्तस्तमठात् तत्र प्रशस्तेरिदमुद्धृतम् ॥ १७८ ॥

इत्थं पुराणकविनिर्मितशास्त्रमध्यादाकर्ण्य किंचिदुभयोरनयोश्चरित्रम् ।
श्रीवृद्धवादि-कविवासवसिद्धसेनवादीन्द्रयोरुदितमस्तु धिये मुदे वः ॥ १७९ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा- 10
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः
शृङ्गोऽभूदमलोऽष्टमः सुचरितं श्रीवृद्ध-सिद्धाश्रितम् ॥ १८० ॥

## ॥ इति श्रीवृद्धवादिसूरिप्रबन्धः* ॥

॥ ग्रन्थाः १९६ ॥ उभयम् ॥ १६८९ ॥ 15

---

1 B N वंशत्व । 2 B N नियामक° । 3 A जावडिनो° । * केवलं B आदर्श एवेयं पंक्तिर्लभ्यते ।

## ९. श्रीहरिभद्रसूरिचरितम् ।

§१. स जयति **हरिभद्रसूरि**रुद्यन्मतिमदतारकभेदबद्धलक्षः ।
शरभव इव शक्तिधिकृतारिर्गुरुबहुलोदयदक्षसङ्गतश्रीः ॥ १ ॥
कुसुमविशिखमोहशत्रुपाथोनिधिनिधनाश्रयविश्रुतः प्रकामम् ।
5 स्थिरपरिचयगाढरूढमिथ्यामहजलबालकशैलवृद्धिविघ्नः[1] ॥ २ ॥
**जिनभट**मुनिराजराजराजत्कलशभवो **हरिभद्रसूरि**रुच्चैः[2] ।
वरचरितमुदीरयेऽस्य बाल्यादविगणयन्मतितानवं स्वकीयम् ॥ ३ ॥–युग्मम् ।
इह निखिलकुहूकृतोपकारादहिमरुचिः शशिना निमन्त्रितो नु ।
रुचिरतररुचिप्रकाशिताशः प्रभवति यत्र निशासु रत्नराशिः ॥ ४ ॥
10 जगदुपकृतिकारिणोर्बहिष्कृद्रवि-शशिनोः शिथिलः समैक्षि मेरुः ।
शिरसि वसतिदस्तु शिश्रिये यस्त्रिदिविभिरस्ति स **चित्रकूटशैलः** ॥ ५ ॥
बहुतरपुरुषोत्तमेशलीलाभवनमलं गुरुसात्त्विकाश्रयोऽन्तः ।
त्रिदिवमपि तृणाय मन्यते यन्नगरवरं तदिहास्ति **चित्रकूटम्** ॥ ६ ॥
हरिरपरवपुर्विधाय यं स्वं क्षितितलरक्षणदक्षनक्षताख्यम् ।
15 असुरपरिवृढव्रजं विभिन्ते[3] स नृपतिरत्र बभौ **जितारि**नामा ॥ ७ ॥
चतुरधिकदशप्रकारविद्यास्थितिपठनोन्नतिरग्निहोत्रशाली ।
अतितरलमतिः पुरोहितोऽभून्नृपविदितो **हरिभद्र**नामवित्तः[4] ॥ ८ ॥
परिभवनमतिर्महावलेपात् क्षितिसलिलाम्बरवासिनां बुधानाम् ।
अवदारणजालकाधिरोहण्यपि स दधौ त्रितयं जयाभिलाषी ॥ ९ ॥
20 स्फुटति जठरमत्र शास्त्रपूरादिति स दधावुदरे सुवर्णपट्टम् ।
मम सममतिरस्ति नैव जम्बूक्षितिवलये वहते लतां च जम्ब्वाः ॥ १० ॥
अथ यदुदितमत्र नावगच्छाम्यहमिह तस्य विनेयतामुपैमि ।
इति कृतकृतिदुस्तरप्रतिज्ञः कलिसकलज्ञतया स मन्यते स्वम् ॥ ११ ॥–त्रिभिर्विशेषकम् ।
§२. अथ पथि स चरन्[5] सुखासनस्थो बहुतरपाठकवर्णिवर्णकीर्णः[6] ।
25 अलिकुलकलितं कपोलपाल्यां मदजलकर्दमदुर्गमीकृतक्ष्माम् ॥ १२ ॥
विपणिगृहसमूहभङ्गमीतभ्रमदतिशोकविहस्तलोकदृश्यम् ।
कुमरणभयमीतमंक्षुनश्यद्द्विपदचतुष्पदहीनमार्गहेतुम् ॥ १३ ॥
विधुरविरुतिसन्निपातपूरैरतिपरिखेदितगेहिवासमर्त्यम् ।
गजपरिवृढमे[7]क्षतोत्तमाङ्गत्वरितविधूननधूतसादिवृन्दम्[8] ॥ १४ ॥–त्रिभिर्विशेषकम् ।
30 प्लवग इव यथा तरुस्थशृङ्गात् कुसुमगणं प्रविचित्य तिग्मभानुम् ।
प्रतिविसृजति चञ्चलस्वभावाज्जिनगृहमेष तथा द्विजोऽध्यरोहत् ॥ १५ ॥

---

1 A वृद्धिघ्नः । 2 N सूरिसत्त्वैः । 3 N विभिन्ने । 4 A नागवित्तः; N नामचित्तः । 5 B संचरन्; N संचरन्नरमुखा° ।
6 N वर्णिकीर्ण । 7 B परिदृढ°; A परिवृढमोक्ष° । 8 A °सारिवृंद°; B सातिवृंदं ।

बलजबलयदर्शनोर्ध्वदृष्टिः कथमपि तीर्थपतिं ददर्श सोऽथ ।
अवददविदितोत्तमार्थतत्त्वो भुवनगुरावपि सोपहासवाक्यम् ॥ १६ ॥

तथाहि–

**वपुरेव [1]तवाचष्टे [2]स्पष्टमिष्टान्नभोजनम् ।**
**न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाद्वलः ॥ १७ ॥** 5

गजमिह परस्ध्यया प्रबुध्य व्यवहितमत्र बटु[3]व्रजैर्भ्रमद्भिः ।
निजमथ निलयं ययौ पुरोधास्तृणमिव सर्वमपीह मन्यमानः ॥ १८ ॥
परतरदिवसे च[4] राजसौधादवसितमंत्रविधेयकार्यजातः ।
प्रति निजनिलयं प्रयान्निशीथे स्वरमसृणोन्मधुरं स्त्रियो जरत्याः ॥ १९ ॥
प्रकटतरमतिः स्थिरप्रतिज्ञो ध्वनिरहितावसरेऽवधारयन् सः । 10
व्यमृशदथ नचाधिगच्छति स्म श्रुतविषमार्थकदर्थितः स गाथाम् ॥ २० ॥

सा चेयम्–

**चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की ।**
**केसव चक्की केसव दु चक्की केसी य चक्की य ॥ २१ ॥**

अवददिति यदम्ब ! चाकचिक्यं बहुतरमत्र विधापितं भवत्या । 15
इह समुचितमुत्तरं ददौ सा शृणु ननु पुत्रक ! गोमयार्द्रलिप्तम् ॥ २२ ॥
इति विहितसदुत्तरेण सम्यक् स च वदति स्म चमत्कृतिं दधानः ।
निजपठितविचारणं[5] विधेहि त्वमिह सवित्रि ! न वेद्म्यहं[6] त्वदर्थम्[7] ॥ २३ ॥
अवददथ च सा यथा गुरोर्नोऽनुमतिरधीतिविधौ जिनागमानाम् ।
न विवृतिकरणे विचारमिच्छुर्यदि हि तदा प्रभुसंनिधौ प्रयाहि ॥ २४ ॥ 20
वचनमिति निशम्य सोऽपि दध्यौ परिहृतदर्पभरः पुरोहितेशः ।
अपि गुरुपुरुषैर्दुरापमध्ये परिकलना न[8] समस्ति वाङ्मयेऽस्मिन् ॥ २५ ॥
जिनमतगृहिगेहचन्द्रशालां यदियमुपैति ततो हि जैनसाध्वी ।
जिनपतिमुनयो गुरुत्वमस्या विदधति तन्मम तेऽपि वन्दनीयाः ॥ २६ ॥
सकलपरिहृतिर्ममागतेयं दुरतिगमा वचनस्य यत् प्रतिष्ठा । 25
व्यमृशदथ स गेहमागतः स्वं तदनु विनिद्रतया निशां च निन्ये ॥ २७ ॥

§ ३. अथ दिवसमुखे तदेकचित्तोऽगमदिह वेश्मनि तीर्थनायकस्य ।
हृदयवसतिवीतरागबिम्बं बहिरपि वीक्ष्य मुदा स्तुतिं प्रतेने ॥ २८ ॥

तथाहि–

**वपुरेव तवाचष्टे भगवन् ! वीतरागताम् ।** 30
**न हि कोटरसंस्थेऽग्नौ[9] तरुर्भवति शाद्वलः ॥ २९ ॥**

---

1 A तथाचष्टे । 2 N स्पष्टं । 3 A B बहुम°; N पटुम°; । 4 N ऽथ । 5 A विचारणां । 6 A वेद्यहं; C वेधिहं । 7 C तमर्थं; N त्वदर्थं । 8 A नास्ति 'न' । 9 N °संस्थितामो ।

दिवसगणमनर्थकं स पूर्वं स्वकमभिमानकदर्थ्यमानमूर्तिः ।
अमनुत स ततश्च मण्डपस्थं **जिनभटसूरि**मुनीश्वरं ददर्श ॥ ३० ॥
हरिमिव विबुधेशवृन्दवन्द्यं शमनिधिसाधुविधीयमानसेवम् ।
तमिह गुरुमुदीक्ष्य तोपपोषात् समजनि जनितकुवासनावसानः ॥ ३१ ॥
5 हतहृदय इव क्षणं स तस्थौ तदनु गुरुर्व्यमृशत्[1] स एव विप्रः ।
य इह तु[2] विदितः स्वशास्त्रमन्त्रप्रकटमतिर्नृपपूजितो यशस्वी ॥ ३२ ॥
मदकलगजरुद्धराजवर्त्मभ्रमवशतो जिनमन्दिरान्तरस्थम् ।
जिनपतिमपि वीक्ष्य सोपहासं वचनमुवाच मदावगीतचित्तः ॥ ३३ ॥–युग्मम् ।
*इह पुनरधुना ययावकस्माज्जिनपतिबिम्बमथादरात् स वीक्ष्य ।
10 अतिशयितरचित्तरङ्गसङ्गी स्तवनमुवाच पुराणमन्यथैव ॥ ३४ ॥
भवतु ननु विलोक्यमेतदग्रे तदनु जगाद मुनीश्वरो द्विजेशम् ।
निरुपमधिषणानिधे! शुभं ते?, कथय किमागमने निमित्तमत्र ॥ ३५ ॥
न्यगददथ पुरोहितो विनीतं किमनुपमप्रतिभोऽहमस्मि पूज्याः ।
जिनमतजरतीवचो मयैकं श्रुतमपि नो विवरीतुमत्र शक्यम् ॥ ३६ ॥
15 अपरसमयविस्तशास्त्रराशिं व्यमृशमहं तु न चक्रिकेशवानाम् ।
क्रममुमुदितं तया प्रबुध्ये तदिह निवेदयत प्रसद्य मेऽर्थम् ॥ ३७ ॥
अथ गुरुरपि जल्पति स्म साधो! जिनसमयस्य विचारणव्यवस्थाम् ।
शृणु सुकृतमते प्रगृह्य दीक्षां तदनुगता च विधीयते तपस्या ॥ ३८ ॥
विहितविनयकर्मणा च लभ्यो मिलदचलातलमौलिनानुयोगः ।
20 इति तदवगमोऽन्यथा तु न स्याद् यदुचितमाचर मा त्वरां विधास्त्वम् ॥ ३९ ॥
अथ स किल समस्तसङ्गहानिं सकलपरिग्रहसाक्षिकं विधाय ।
गुरुपुरत उपाददे चरित्रं परिहृतमन्दिरवेप इष्टलोचः ॥ ४० ॥
गुरुरवददथागमप्रवीणा [3]यमि-यतिनीजनमौलिशेखरश्रीः ।
मम गुरुभगिनी महत्तरेयं जयति च विश्रुत**जाकिनी**ति नाम्नी ॥ ४१ ॥
25 अभणदथ पुरोहितोऽनयाहं भवभवशास्त्रविशारदोऽपि मूर्खः ।
अतिसुकृतवशेन धर्ममात्रा निजकुलदेवतयेव बोधितोऽस्मि ॥ ४२ ॥
अयमवगतसाधुधर्मसारः सकलमहाव्रतधूर्धुरंधरश्रीः ।
गुरुमगददथ प्रवर्तमानागमगणसारविचारपारदृश्वा ॥ ४३ ॥
अधिकरणिकशास्त्रसुप्रसन्नानुगतिविलोल इयद्दिनानि जज्ञे ।
30 त्वदपरिचयमूर्छितो मुनीश! प्रचिकटिपुर्निजमासुतीबलत्वम् ॥ ४४ ॥
धृतधृतिरधुना[4] शुभानुभावात् श्रुतभरसागरमध्यलीनचित्तः ।
अनधिगतविमुक्तपद्मवासाप्रियविरहप्रभृतिव्यथस्त्वभूवम् ॥ ४५ ॥

---

1 A विमृशत्। 2 N नु; C नास्ति। * नास्त्येतत् पद्यं C आदर्शे। 3 A यम°। 4 A °रमुना।

गुरुरिदमवधार्य धर्मशास्त्राध्ययनसुपाठनकर्मलब्धरेखम्।
सुरचितसुकृतोपदेशलीलं निजपदमण्डनमादधौ सुलग्ने ॥ ४६ ॥
अनुचरितपुराणपा**दलिप्त**प्रमुखसमो **हरिभद्र**सूरिरेषः।
कलिसमययुगप्रधानरूपो विमलयति क्षितिमंहिसंक्रमेण ॥ ४७ ॥
अपरदिवि निजौ स जामिपुत्रौ पितृकुलकर्कशवाक्यतो विरक्तौ। 5
प्रहरणशतयोधिनौ कुमारौ बहिरवनावुदपद्ययदात्तचिन्तौ ॥ ४८ ॥
अथ चरणयुगं गुरोः प्रणम्य प्रबभणतुर्गृहतो विरागमेतौ।
तदनु गुरुरुवाच वासना चेन् मम सविधे[1] व्रतभारमुद्वहेथाम् ॥ ४९ ॥
तदनुमतिमवाप्य चैष **हंसं** स**परमहंस**मदीक्षयत् ततोऽथ।
व्यचरयत[2] स तौ प्रमाणशास्त्रौपनिषदिकश्रुतपाठशुद्धबुद्धी ॥ ५० ॥ 10

§४. अथ च सुगततर्कशास्त्रतत्त्वाधिगममहेच्छतया गुरुक्रमेभ्यः।
अवनितलमिलल्ललाटपट्टौ सुललितविज्ञपनां वितेनतुस्तौ ॥ ५१ ॥
दुरधिगमतथागतागमानामधिगमनाय सदाहितोद्यमौ तौ।
प्रदिशत नगरं यथा तदीयं प्रति निजबुद्धिपरीक्षणाय यावः ॥ ५२ ॥
गुरुरपि हृदये निमित्तशास्त्रादधिगतमुत्तरकालमाकलय्य। 15
अवददिति शुभं न तत्र वीक्षे[3]ऽभ्युपगममेनमतो हि माद्रियेथाः ॥ ५३ ॥
ननु पठतमिहैव देशमध्ये गुणियतिनायकसन्निधौ तु वत्सौ।
मतिरतिशयभासुराऽपि केषांचिदपि परागमवेदिनी समस्ति ॥ ५४ ॥
गुरुमिह विरहय्य कः कुलीनः पथि निरपायतमेऽपि बंभ्रमीति।
कथमवगतदुर्निमित्तभावे तदिह न नोऽनुमतिर्दुरन्तकार्ये ॥ ५५ ॥ 20
अवददथ विहस्य **हंस**नामा गुरुजनयुक्तमिदं तु वत्सलत्वम्।
भवदनुचरणात् प्रभाववन्तौ किमु शिशुकौ परिपालितौ न पूज्यैः ॥ ५६ ॥
अपशकुनगणः करोतु किंवाऽध्वनि परपुर्यपि चेतनायुतानाम्।
अविरतमभिरक्षति क्षतान्नौ चिरजपितो भवदीयनाममन्त्रः ॥ ५७ ॥
दुरधिगमदविष्ठदेश्यशास्त्राधिगमकृते गमनादथागमाच्च। 25
क इव नु विगुणः कृतज्ञतायाः[4] क्षतिकरणस्तदिदं विधेयमेव ॥ ५८ ॥
अवददथ गुरुर्विनेययुग्मं हितकथने हि न औचिती भविष्यत्।
भवति खलु ततो यथेहितं वा विदधतमुत्तममद्य निन्दितं वा ॥ ५९ ॥
अथ सुगतपुरं प्रतस्थतुस्तावगणितसद्[5]गुरुगौरवोपदेशौ।
अतिशयपरिगुप्तजैनलिङ्गौ न चलति खलु भवितव्यतानियोगः ॥ ६० ॥ 30
कतिपयदिवसैरवापतुस्तां सुगतमतप्रतिबद्धराजधानीम्।
परिकलितकलावधूतवेषावतिपठनार्थितया मठं तमाप्तौ ॥ ६१ ॥

1 A C सविधि। 2 B N व्यरचयत। 3 A B वीक्ष्ये। 4 C कृतज्ञताक्षति°। 5 N B °गणितगुरु°।

पठनविधिकृते विहारमाला विपुलतराऽस्ति च तत्र[1] दानशाला ।
सुगतमुनिपतिश्च तत्र शिष्याननवरतं किल पाठयेद् यथेच्छम् ॥ ६२ ॥
अतिसुखकृतभुक्तिः पठन्तौ सुविषमसौगतशास्त्रजातमत्र ।
परबुधजनदुर्गमार्थतत्त्वं कुशलतया सुखतोऽधिजग्मतुस्तौ ॥ ६३ ॥
5 जिनपतिमतसंस्थिताभिसंधिं[2] प्रति विहितानि च यानि दूषणानि ।
निहतमतितया यतेर्निरीक्षातिशयवशेन निजागमप्रमाणैः ॥ ६४ ॥
दृढमिह परिहृत्य तानि[3] हेतून् विशदतरान् जिनतर्ककौशलेन ।
सुगतमत[4]निषेधदार्ढ्ययुक्तान् समलिखतामपरेषु पत्रकेषु ॥ ६५ ॥–युग्मम् ।
इति रहसि च यावदाददाते गुरुपवमानविलोडितं हि तावत् ।
10 अपगतममुतः परैश्च लब्धं गुरुपुरतः समनायि पत्रयुग्मम् ॥ ६६ ॥
अवलोकयतोऽस्य हेतुदार्ढ्यं प्रति निजतर्कमुदग्रदूषणेषु ।
जिनपतिमत[5]भूषणेषु पक्षेष्वजयमभून्मनसि भ्रमो महीयान् ॥ ६७ ॥
अभणदथ स विस्मयातिरेकात् पिपठिपुरर्हदुपासकोऽस्ति कश्चित् ।
अपर इह मदीयदूषितं कः पुनरपि भूषयितुं समर्थबुद्धिः ॥ ६८ ॥
15 स्फुरति च क उपाय ईदृशस्याधिगमविधाविति चिन्तयन् स तस्थौ ।
कचिदमलधियामपि स्खलन्ति प्रतिपद ईदृशि कुत्रचिद् विधेये ॥ ६९ ॥
उदमिषदथ बुद्धिरस्य मिथ्यामहमकराकरपूर्णचन्द्ररोचिः ।
अवददथ निजान् जिनेशबिम्बं बलजपुरो निदधध्वमध्वनीह ॥ ७० ॥
तदनु शिरसि तस्य भो ! निधाय क्रमणयुगं हि समागमो विधेयः ।
20 इदमिह[6] न करिष्यति प्रमाणं मम पुरतोऽध्ययनं स मा विधत्ताम् ॥ ७१ ॥
गुरुवचनमिदं तथैव बौद्धैः कृतमखिलैरपशृंखलैः खलैस्तैः ।
अथ मनसि महार्तिसंगतौ तौ विममृशतुः प्रकटं हि संकटं नः ॥ ७२ ॥
न विदधिव[7] यदिह क्रमौ सशङ्कौ प्रतिकृतिमूर्धनि लक्षितौ तदानीम् ।
नहि पुनरपि जीविते किलाशा विकरुणमानसपाठकादमुष्मात् ॥ ७३ ॥
25 बलिमिह पदयोः क्रियावहे सद्गुरुहरिभद्रमुनीश्वरस्य तस्य ।
अतिदुरितमनागतं विचार्य व्रजनविधिं प्रतिषेधति स्म यः प्राक् ॥ ७४ ॥
अविनयफलमावयोस्तदुग्रं समुदितमत्र विनिश्चितं तथैतत् ।
न चलति नियमेन दैवदृष्टं[8] निजजनने सकलङ्कता मृतिर्वा ॥ ७५ ॥
नरकफलमिदं न कुर्वहे श्रीजिनपतिमूर्द्धनि पादयोर्निवेशः ।
30 परिशटिततरौ वरं विभिन्नौ निजचरणौ ननु जैनदेहलग्नौ ॥ ७६ ॥
निधनमुपगतं यथा तथा वा तदिह च साहसमेव संप्रधार्यम् ।
इति दृढतर आवयोर्निबन्धः प्रतिकृतमत्र कृते विधेयमेव ॥ ७७ ॥

1 A B तत्र तत्र । 2 A संधिप्रति° । 3 N तान् हि । 4 C मति°; N गत° । 5 A °पतिमथ । 6 C N इदमपि । 7 N विदधे च । 8 A दैवदिष्टं ।

तदनु च खटिनीकृतोपवीतौ जिनपतिबिम्बहृदि प्रकाशसत्त्वौ ।
शिरसि च चरणौ निधाय यातौ प्रयततमैरुपलक्षितौ च बौद्धैः ॥ ७८ ॥
प्रतिघवशकडारकेकराक्षैरतिकुशलैरवलोकितौ च तैस्तौ ।
गुरुरवददहो पुनः परीक्षामपरतरां सुगतद्विषोर्विधास्ये ॥ ७९ ॥
स्थिरतरमनसस्तदाध्वमद्य प्रतिविधये हि न चादरो विधेयः । 5
सुरशिरसि च पादपातमुख्यं न हि समधीनिधयोऽपि संविदध्युः ॥ ८० ॥
अथ च कृतमिहोपवीतमेतत् प्रतिकृतमत्र कृते दृढत्वचिह्नम् ।
दृढमतिरपरोऽपि कश्चिदीदृग् नहि विदधाति यथा विकर्मभीतः ॥ ८१ ॥
परनगरसमागताश्च विद्यार्थिन इह नैव मया कदर्थनीयाः ।
भवति च कुयशोभरस्तदत्र प्रतिकरणं कुपरीक्षितं न कार्यम् ॥ ८२ ॥ 10
इति वचनममुष्य ते निशम्य स्थितिमभजन् गुरुणा जना निरुद्धाः ।
शयनभुवि गृहोपरिस्थितानां प्रतिदिशि यामिक एक एव चक्रे ॥ ८३ ॥
जिनगुरुशरणं विधाय रात्राविह शयितौ परमेष्ठिनः स्मरन्तौ ।
समगत च तयोरनिच्छतोरप्यसुखभरे सुलभा तदा प्रमीला ॥ ८४ ॥
प्रतततम[1]घटावली तदोर्द्ध्वावनितलतः स विमोचयांबभूव । 15
खडखडखडिति स्वरेण शय्यां विजहुरमी विरसं तदा रटन्तः ॥ ८५ ॥
निजनिजकुलदेवताभिधास्तेऽभिदधुरिहाद्भुतसम्भ्रमेण तौ च ।
जगृहतुरथ जैननाम तेषां नरयुगलं मतमित्यभूच्च शब्दः ॥ ८६ ॥
अथ निधनभयेन साहसिक्याद् वरतरमौपयिकं तु लब्धवन्तौ ।
अनवरतमहातपत्रवृन्दात् तत उदबध्यत तद्युगं स्वदेहे ॥ ८७ ॥ 20
तनुरुहयुगवत् ततः पृथिव्यां मुमुचतुरंगमथोर्द्ध्वभूमितस्तौ ।
मृदुशयनतलादिवोत्थितौ चाप्रहततनू कुशलावु[2]दग्रबुद्ध्या ॥ ८८ ॥
लघुतरचरणप्रचारवृत्त्या द्रुतमपचक्रमतुः पुरात् तदीयात् ।
मतिविभववशादबुद्धयानौ छलयति[3] कं[4] न मतिर्हि सुप्रयुक्ता ॥ ८९ ॥—त्रिभिर्विशेषकम् ।
हत हत परिभाषिणस्तयोस्तेऽनुपदमिमे प्रययुर्भटास्तदीयाः । 25
अतिसविधमुपागतेषु **हंसो**ऽवदिति तत्र कनिष्ठमात्मबन्धुम् ॥ ९० ॥
व्रज झगिति गुरोः प्रणामपूर्वं प्रकथय [5]मामकदुष्कृतं हि मिथ्या ।
अभणितकरणान्ममापराधः कुविनयतो विहितः समर्षणीयः ॥ ९१ ॥
इह निवसति **सूरपाल**नामा शरणसमागतवत्सलः क्षितीशः ।
नगरमिदमिहास्य चक्षुरीक्ष्यं निकटतरं व्रज सन्निधौ ततोऽस्य ॥ ९२ ॥ 30
इति सपदि विसर्जितोऽपि तस्थौ क्षणमेकं स तु तैः सहस्रयोधी ।
गततनुममतस्त्वयुद्ध्यतैतैः[6] हठहृतधन्वशरावलीभि**र्हंसः** ॥ ९३ ॥

---

1 N प्रतनुतम° । 2 B C कुशलादुदग्र° । 3 N बलयति । 4 A किं । 5 A दुष्कृतमामकं । 6 N युध्यते तैः ।

अतिविपुलतया शिलीमुखानां तितउरिवाजनि तस्य विग्रहश्च ।
अपतदथ स बंधुरक्त उर्व्यामहितनरैरभवत् ततः परासुः ॥ ९४ ॥
अवरज इह [1]मोहतो ह्यमुञ्चन् सविधममुष्य कृपार्द्रमर्त्यवाक्यात् ।
त्वरिततरपदप्रचारवृत्त्याऽगमदवनीपतिसूरपालपार्श्वम् ॥ ९५ ॥
5 शरणमिह ययौ च तस्य धीमान् तदनुपदं रिपवः परः सहस्राः ।
अवनिपतिमवाप्य चैनमूचुः प्रवितर नः प्रतिपन्थिनं समेतम् ॥ ९६ ॥
अवददथ स को बलेन नेता मम भुजपञ्जरवर्तिनं किलैनम् ।
अनयिनमपि नार्पयाम्यमुं तत् किमुत कलाकलितं नयैकनिष्ठम् ॥ ९७ ॥
सुगतमतभटास्तथाऽभ्यधुस्तं परतरदेशनरस्य हेतवे त्वम्[2] ।
10 धनकनकसमृद्धराज्यराष्ट्रं गमयसि ह्यस्मदधीशकोपनात् किम् ॥ ९८ ॥
अवददिह स चोत्तरं गरीयःपुरुषगणैर्मम यद्व्रतं व्यधायि ।
मरणमथ च जीवितं हि[3] भूयात् नहि शरणागतरक्षणं त्यजामि ॥ ९९ ॥
इतरदिह दधामि चैकमेष प्रकटमतिर्विदित[4]प्रमाणशास्त्रः ।
तत इममभिभूय वादरीत्योचितमिह धत्त पराजये जये वा ॥ १०० ॥
15 अथ वचनविचक्षणः स तेषामधिपतिराह वचस्त्विदं प्रियं नः ।
परमिह वदनं न दृश्यमस्य क्रमयुगलं सुगतस्य मूर्ध्नि योऽदात् ॥ १०१ ॥
तदनु च यदि शक्तिरस्ति तस्यान्तरिततरः प्रतिसीरयाशु हेतून् ।
यदि जयति स यातु कौशलात् तन्नियतमसौ विजितस्तु वध्य एव ॥ १०२ ॥
अथ घटमुखवादिनी रहःस्था वदति तथागतशासनाधिदेवी ।
20 स्वयमिह **हरिभद्र**सूरिशिष्यः पुनरनयोर्न बभूव दृष्टिमेलः ॥ १०३ ॥
[5]व्यमृशदथ स च[6] च्छलैकनिष्ठाः सुगतमते प्रभवन्ति सूरयोऽपि ।
अवितथमिह नो घटेत चैतत् त्रुटति वचो न ममापि यत्पुरस्तात् ॥ १०४ ॥
अथ बहुदिनवादतो विषण्णः स **परमहंस**कृती विषादमाधात्[7] ।
विभवति[8] गुरुसंकटे विचिंत्या निजगणशासनदेवता किलाम्बा ॥ १०५ ॥
25 स्मृतिवशत इयं तदा [9]समायाज्जिनमतरक्षणनित्यलब्धलक्षा ।
वदति च शृणु वत्स ! मुक्तिमस्माद्दुरितभराद् गुरुसत्त्वमूलभूमे ! ॥ १०६ ॥
सुगतमतसुरी समस्ति तारा वदति निरन्तरमत्रुटद्वचः सा ।
मनुज इह सुरैः समं विवादी क इव भवन्तमृते समृद्धसत्त्वम् ॥ १०७ ॥
प्रतिवद च तमद्य दंभवादिन्नुवमसमानकृतप्रतिश्रवं त्वम् ।
30 अनुवदनपुरःसरं प्रजल्प्यं भवति कथं तद्दते हि वादमुद्रा ॥ १०८ ॥
[10]छलमिदमधुनैव तद्विना स्यात् प्रकटतरं [11]तददतो जयस्तवैव ।
अवददथ स मेऽत्र कोऽन्य एवं जननि ! विना भवतीं करोति सारां ॥ १०९ ॥

---

1 A B मोहितो । 2 B C N स्वम् । 3 A नास्ति 'हि' । 4 B C विदितः । 5 B विमृशद्° । 6 N स वत्सलैक° ।
7 A °मागात्; B °मादधान; C विषाद नध्यात् । 8 B विभयति । 9 N समाया जिन° । 10 N बल° । 11 B N वदतो ।

इति समुचितमुत्तरं विधायापरदिवसे विदधौ सुरीनिदेशम्[1]।
प्रतिवदितरि संश्रिते च मौनं स जवनिकांचलमूर्द्ध[2]माततान ॥ ११० ॥
कलशमथ चकार पादपातैर्विशकलमाश्रितवैपरीत्यमेषः।
अवददथ सदम्भवादमुद्राभ्रुवमिह कुष्टिजनाधमा भवन्तः ॥ १११ ॥
वधकृतमतयोऽस्य ते ह्यमित्राः समभिहिता[3] ननु तेन भूमिपेन। 5
नयविजयमयः परार्द्ध्य( र्घ्य ? )वृत्तः किमु वधमर्हति साधुलब्धवर्णः ॥ ११२ ॥
अथ कुनयमपीममातनुध्वं यदि न सहेऽहमिदं निशम्यतां तत्।
रणभुवि परिभूय मां ग्रहीता खलु य इमं स तु लात्वपातुकश्रीः[4] ॥ ११३ ॥
तदनु नयनसंज्ञयाऽथ विद्वान् ननु समकेति पलायनाय तेन।
लघु लघु स पलायनं च चक्रे क इव न नश्यति मृत्युमीविहस्तः ॥ ११४ ॥ 10
द्रुतचरणगतैर्बहिः प्रगच्छन् स च निर्णेजकमेकमालुलोके।
तुरगिषु सविधागतेष्ववादीत् तमिह व्रज त्वमिहाययौ प्रपातः ॥ ११५ ॥
स्वमतिविभवतः प्रणाशितेऽस्मिन् वसनविशोधनमादधत् तथासौ।
तरलतुरगिणा च जल्पितो यन्मनुजोऽनेन पथा जगाम नैकः ॥ ११६ ॥
रजक इह स तेन दर्शितोऽस्य त्वरिततरः स च शीघ्रमेव तेन। 15
निजभटनिवहे समार्पि धृत्वा प्रतिववले[5] च बलं तदीयवाक्यात् ॥ ११७ ॥
निजमतिबलतस्ततः प्रकाशं[6] विभयमनाश्चलितोऽभि**चित्रकूटम्**।
अभिसमगत तद्दिनैः[7] कियद्भिर्गुरुचरणाम्बुरुहं[8] समागमोत्कः[9] ॥ ११८ ॥
इतर इति निजेशकार्य्यसिद्ध्या नृपतिममुं किल सांत्वयांबभूवुः।
अणुतरविपये दृढं सहायं परिहरते हि क उग्रपौरुषोऽपि ॥ ११९ ॥ 20
अथ निजगुरुसंगमामृतेन प्लुतकरणः शिरसा प्रणम्य पादौ।
दृढतरपरिरब्ध एष तैश्च प्रविगलदश्रुजलो जगाद सद्यः ॥ १२० ॥
गुरुजनवचसां स्मरामि तेषां परतरदेशगतौ हि यैर्निषिद्धौ।
निशमयत विभो ! प्रबन्धमेनं कुविनयशिष्यजनास्यतः प्रवृत्तम् ॥ १२१ ॥
इति चरितमसौ जगाद यावन्निजगुरुबन्धुपरासुतावसानम्। 25
अथ निगदत एव हृद्भिभेदः[10] समजनि जीवहरो बली हि मोहः ॥ १२२ ॥
§९. विमृशति **हरिभद्रसूरि**रीदृक् किमु मम संकटमद्भुतं प्रवृत्तम्।
निरुपचरित[11]वीतरागभक्तेरुदितमिदं निरपत्यतामनस्यम्* ॥ १२३ ॥
विमलतरकुलोद्भवौ विनीतौ यमनियमोद्यमसंगतौ प्रवीणौ।
परमतविजयप्रकाशपंडापरिमलशोभितविद्वदर्चितांह्री ॥ १२४ ॥ 30
अपि परतरदेशसंस्थशास्त्राधिगमरसेन गतौ च विप्रकृष्टम्।
मदसुकृतवशेन जीवितान्तं ययतुरुभावपि कर्म धिक् दुरन्तम् ! ॥ १२५ ॥

---

1 A निवेशं। 2 B N °मूर्ध्नि°। 3 A C समभिहता। 4 A °पातुकः श्रीः। 5 N प्रतिवचले। 6 A प्रकाश्यं। 7 N °समगमद्दिनैः। 8 N °रुहां। 9 समागमः कः। 10 N °विभेदं। 11 N निरुपम°; A निरुपचित°। * 'आमनस्यं प्रगाढं दुःखं' इति C टिप्पणी।

विनयमथ शमं स्मरामि किं वा गुरुपदसेवनमद्भुतं किमत्र ।
नहि मम सदृशैस्तु मन्दभाग्यैः परिचरणं ननु तादृशां विलोक्यम् ॥ १२६ ॥
मुखकृतकवलैर्विवृद्धदेहौ चटकशिशू इव यावजातपक्षौ ।
अवसर इह तौ सपक्षताया[1] भृशमतिगम्य दृशोः पथं व्यतीतौ ॥ १२७ ॥
5 कलुषकुलनिवास एष देहः सुचरितकक्षदवानलार्चिरूमः ।
इह हि किमधुना प्रधार्यतेऽसौ विरहभरेऽपि [2]सुशिक्षयोरवाप्ते[3] ॥ १२८ ॥
विनिहततमनिर्वृतिप्रकारां कमिव विशेषमवाप्नुमत्र धार्य्याः ।
सुललितवचनौ विनेयवर्यावसव इमौ हि विना कदर्यधुर्याः ॥ १२९ ॥
इति विमृशत एव सौगतानामुपरि महः समुदैन्निजान्वयस्थम् ।
10 सुविहितपरिकर्मणाऽपि साध्यं न सहजमाभिजनं महत्तमेऽपि ॥ १३० ॥
अवददथ स सौगताः कृतास्ते परिभवपूर्णहृदो गृहस्थितेन ।
अतिविनयविनेयहिंसनेनाद्भुतहतचित्तनिवृत्तिसापराधाः ॥ १३१ ॥
श्रुतविहितनयेऽपि युक्तमुक्तं सकलबलेन निवारणं रिपूणाम् ।
[4]परभवगतिरस्य निर्मला नो य इह सशल्यमना लभेत मृत्युम् ॥ १३२ ॥
15 इति जिनपतिशासनेऽपि सूक्तं गुरुतरदोषमनुद्धृतं हि शल्यम् ।
सुगतमतभृतो निबर्हणीयाः स्वसुसुतनिर्मथनोत्थरोपपोषात् ॥ १३३ ॥–विशेषकम् ।
इति मतिमति चेतसि प्रकामं गुरुमभिपृच्छय ययौ विना सहायम् ।
द्रुवि विगलितसंयमानुकम्पो नगरमवाप च भूमिपस्य तस्य ॥ १३४ ॥
द्रुततरमभिगम्य पार्श्वमस्य प्रकटतरीकृतजैनलिङ्गरूपः ।
20 वदति च **हरिभद्रसूरि**रेवं जिनसमयप्रवराशिषाभिनन्द्य ॥ १३५ ॥
शरणसमितवज्रपञ्जर ! त्वं शृणु मम वाक्यमशक्यसत्त्वभङ्ग ! ।
इह हि मम विनेय उज्जिजीवे स **परमहंस** इति त्वया प्रसिद्धः ॥ १३६ ॥
किमिव न तव साहसं प्रशस्यं क्षितिप ! शरण्यकृते हि लक्ष्य(क्ष)संख्यम् ।
बलमवगणितं तदेतदभ्युन्नतिकरमूर्जितमस्ति नापरस्य ॥ १३७ ॥
25 निरगममिह सांयुगीनवृत्तिः कृतिजनरीतित उन्नतप्रमाणः ।
अतिशयनिभनिष्टवाक्प्रबन्धान् सुगतमतस्थितकोविदान् जिगीषुः ॥ १३८ ॥
अवददथ स **सूरपाल**भूपो मम तव चापि विजेयतापदे ते ।
[5]छलविवदननिष्ठिता[6] अजेयाः शलभगणा इव ते ह्यमी बहुत्वात ॥ १३९ ॥
परमिह कमपि प्रपञ्चमग्र्यं ननु विदधामि यथा भवद्विपक्षः ।
30 स्वयमपि विलयं प्रयाति येन प्रतिकूलं वचनं तु मे न गण्यम् ॥ १४० ॥
अवहितिपर वाचमेककां मे शृणु तव काचिदजेयशक्तिरस्ति ।
अवददथ च को हि मां विजेता वहति सुरी यदुदन्तमम्बिकाख्या ॥ १४१ ॥
वचनमिति निशम्य तस्य भूपः सुगतपुरे प्रजिघाय दूतमेषः ।
अपि स लघु जगाम तत्र दूतो वचनविचक्षण आहतप्रपञ्चः ॥ १४२ ॥

1 A समक्षताया । 2 A शिशुक्षयो° । 3 C °रवाप्तो । 4 A परमभगवति° । 5 B बल° । 6 A °निष्ठता° ।

सुगतगुरुमथ प्रणम्य तत्रावददिति भूमिपतिः स सूरपालः ।
स्फुरिततनुमिवेह भारतीं त्वामिति किल विज्ञपयत्यनल्पभक्तिः ॥ १४३ ॥
इह मम पुरमाजगाम चैको बुध इह बुद्धमताभिजातिरूपः[1] ।
भवति च भुवनत्रयप्रसिद्धे प्रतपति किं तु[2] स एष वादिशब्दः ॥ १४४ ॥
इदमिह महते त्रपामराय प्रभवति तत् क्रियते तथा [3]यथा सः । 5
निधनमविजयः स्वयं स यायात् कुरुतेऽन्योऽपि यथा न कश्चिदित्थम् ॥ १४५ ॥
दशबलमतनायकः स मानप्रतिघवशो वदति स्म तं प्रमोदात् ।
इह जगति समस्तदेशनानाविबुधगणस्तमहं तिरश्चकार ॥ १४६ ॥
जिनसमयविशारदोऽपि कश्चिन्नवपठितो भविताऽत्र वावदूकः ।
वचनमदमहं ततो विनेष्ये गहनविकल्पसमूहकल्पनाभिः ॥ १४७ ॥ 10
स्वयमिह निधने [4]कृतप्रतिज्ञः स किमु भविष्यति तद्वद त्वमेव ।
पटुवच इति जल्पति स्म दूतः प्रभुपुरतो मम गीः प्रवर्त्तते किम् ॥ १४८ ॥
तव पदकमलप्रसादतो वा किमिव न मे शुभमद्भुतं भविष्यत् ।
मतिरिति तु मम प्रकाशते[5]ऽसौ परमिह [6]सुप्रभुणा विचार्य कार्यम् ॥ १४९ ॥
लिखत[7] वच इदं पणे जितो यः स विशतु तप्तवरिष्ठतैलकुण्डे । 15
इति भवतु स्ववीप्सया प्रशंसामिह विदधेऽस्य गुरुर्विचारहृष्टः ॥ १५० ॥
विपुलमतिरथ प्रगल्भदूतः पुनरपि वाचमुवाच दार्ढ्यहेतोः ।
प्रभुचरणयुगं तथापि धाष्टर्यात् पुनरपि विज्ञपयामि किञ्चिदत्र ॥ १५१ ॥
शृणुत वसुमती[8] रत्नगर्भा[9] भवति कदाचन कोऽपि तत्र विद्वान् ।
अतिशयितमतिर्यतो जिनानां ननु भवतामवमानना हि माऽभूत् ॥ १५२ ॥ 20
असदिह परिकल्पनं ममैतद् गगनतले कुसुमोद्गमेन तुल्यम् ।
जयिषु[10] किल भवत्सु यत्सनाथा[11] वयमिह तत्तु दृढं विचारणीयम् ॥ १५३ ॥
गुरुरवददसौ भयं किमेतद् भवति तथा भ्रम एव कश्च[12] फल्गुः ।
अपि मयि चिरसेवितेऽपि यद्वः स्फुरति परेण विजेयताभिशङ्का ॥ १५४ ॥
क इव मम पुरः स कोऽपि विद्वाननधिगतस्वपरप्रमाणभूमिः । 25
मदगदमवमोचये न चेत्तं तदहमहो न निजं वहामि नाम ॥ १५५ ॥
स्वनृपतिपुरतः प्रशाधि वाचं मम विनियंत्रितवादिपौरुषस्य ।
वयमिह परवादिलाभतुष्टा अनुपदमेव समागमाम ते यत् ॥ १५६ ॥
वचनमिति निशम्य तस्य दूतो मुदितमनाः पुरमाययौ निजं सः ।
इति सुविहितबौद्धविप्रलम्भान्नृपतिमवर्द्धयदत्र सूरपालम् ॥ १५७ ॥ 30
त्रिचतुरदिवसान्तरेण सोऽपि प्रभुरिह बौद्धमतस्य तत्र चायात् ।
अतिपरिवृढसेव्यपादपद्मो व्यधित स पूर्वपणेन वादमुद्दाम् ॥ १५८ ॥

---

1 A B °भियातिरूपः । 2 B किमिति; C किं स । 3 A यथा तथा । 4 A C निधनकृत° । 5 A B प्रकाशतो । 6 N सु प्रभु° । 7 A लिखित । 8 A °मतीह रत्न° । 9 N हिरण्यगर्भा । 10 A जय । 11 A मनाथो । 12 B N कस्य ।

विबुधपतिरचिन्तयत् तथा चासौ कथमहमस्य कृते स्मरामि ताराम् ।
अथ च किमनया स्मृताऽपि याऽसौ जितमदरिव्रजघातिनी न सद्यः ॥ १५९ ॥
इति स च परिचिन्त्य वादसंसद्युपहरिभद्रविशारदं समेत्य ।
अवददिदमनित्यमेव सर्वं सदिति वचः परिसंस्कृतं यदेतत् ॥ १६० ॥
5 इह भवति च पक्ष एव हेतुर्जलधरवन्ननु सन्ति चात्र भावाः ।
निगदित इति मूलपक्षजाते, वदति ततः प्रतिवाद्यनूद्य सम्यक् ॥ १६१ ॥
यदि सकलमिदं विनश्वरं तत् स्मरणविचारणचारिमा कथं स्यात् ।
तदिदमिह पुरावलोकितं यत् कथमियमित्यनुसंहृतिर्घटेत ॥ १६२ ॥
वदति स मतिसन्ततिः स्म तुल्या भवति सदैव सनातना मते नः ।
10 बलमिदमनुसंहृतेश्च तस्या व्यवहरणं च तथैव वर्त्तते नः ॥ १६३ ॥
अनुवदति मुदा स्म जैनविद्वानिह मतिसन्ततिरप्रणाशिनी चेत् ।
सदिति सुविदितैव तत् ध्रुवत्वानुमतिरिदं तव चात्मवाग्विरुद्धम् ॥ १६४ ॥
न विबुधकमनीयमेतदुच्चैः स्वसमयमूढमतिर्भवान् यदिच्छुः ।
ननु सकलविनश्वरत्वसन्धां परिहर तच्चिरकालतो विलग्नाम् ॥ १६५ ॥
15 इति वचननिरुत्तरीकृतोऽसौ सुगतमतप्रभुराचचार मौनम् ।
जित इति विदिते [1]जनैर्निपेते द्रुततरमेष सुतप्ततैलकुण्डे ॥ १६६ ॥
अथ कलकल उद्बभूव तेषां दशबलविद्वदरीतिमृत्युभावात् ।
इति भवदपमानभारभुग्ना भयतरला अनशन्नमी निरीशाः ॥ १६७ ॥
अथ विशदविशारदस्तदीयो वदनमतिः किल तद्वदेक एकः ।
20 समगत च[2] तथैव पक्षपास्ते निधनमवापुरनेन निर्जिताश्च ॥ १६८ ॥
दशबलमत[3]शासनाधिदेवी खरवचनैरुपलम्भिताऽथ सा तैः ।
प्रतिघवशविसर्पिदर्पभङ्गे रणकदिनेषु सुरस्मृतेर्हि कालः ॥ १६९ ॥
ननु[4] शृणु कटपूतनेऽत्र यस्त्वामविरतमर्चयिता सुधी[5] नरेन्द्रः ।
कुमरणविधिना मृतोऽधुना तन्ननु भवती क्व गतासि[6] हन्त तारे ! ॥ १७० ॥
25 मलयजघनसारकुङ्कुमादि-प्रकृतिविलेपनधूपसारभोगैः ।
सुरभिकुसुमदामभिश्च सम्यग् ननु तव दृषद इव व्यधायि पूजा ॥ १७१ ॥
दृढतरपरिपूजिता भवादृग् विधुरतरावसरेऽपि सन्निधानम् ।
यदि न वितनुते ततः स्वदेहे स किमु नहि क्रियते सुवस्तुभोगः ॥ १७२ ॥
सविधतरभुवि स्थिता च तारा सुकरुणमानसवासना ह्यमीषु ।
30 अनुचितमपि जल्पतो निशम्याप्रतिघमना मृदुवागिदं जगाद ॥ १७३ ॥
अतिशयशुचि( च ? )माप्य यद्वराका असदृशमप्यनुवादिनो भवन्तः ।
कुवचनमपि[7] नो मयाऽत्र गण्यं मम वच एकमिदं निशम्यतां च ॥ १७४ ॥
अतिपरतरदेशतः समेतौ परसमयाधिगमाय सङ्गतौ च ।

---

1 B N जिनैः । 2 N °गतवत्तथैव । 3 N °मति° । 4 A अननु शृणु; B अनुशृणु; C तनुशृणु । 5 N सुधा ।
6 C गतास्थि । 7 A °मधि ।

जिनशिरसि पदप्रदानपापाभ्युपगमरूपनिभेऽप्यमुक्तसत्त्वौ ॥ १७५ ॥
प्रतिकृतमिह तत्कृते दधानौ झटिति[1]च तेन हतौ पलायमानौ ।
नयपथपथिकौ महामुनी यत्तत्प्रति[2]कृतिरस्ति तस्य दुष्कृतस्य ॥ १७६ ॥
तत इति समुपेक्षितो मया यद्विलयमवाप निजैनसैव तस्मात् ।
विदधति ननु येऽस्य[3] पक्षमुच्चैर्ननु मम तेऽपि सदा ह्युपेक्षणीयाः ॥ १७७ ॥ 5
इति शुचमपहाय यूयमेते निजनिजभूमिषु गच्छताद्य धीराः ।
दुरितभरमहं हि वो हरिष्ये निजसन्तानसमेषु को हि मन्युः ॥ १७८ ॥
इति वचनमुदीर्य सा तिरोधान् निजनिजदेशगणं ययुश्च तेऽथ[4] ।
अपरतरपुरेषु[5] बौद्धवृद्धा[6] उपशममापुरितिश्रुतप्रवृत्त्या ॥ १७९ ॥
इह किल कथयन्ति केचिदित्थं गुरुतरमन्त्रजप[7]प्रभावतोऽत्र । 10
सुगतमतबुधान् विकृष्य तप्ते ननु **हरिभद्र**विभुर्जुहाव तैले ॥ १८० ॥
§ ६. अथ **जिनभटसूरि**रत्र कोपाद्भुतमिह शिष्यजने निजे निशम्य ।
उपशमनविधौ प्रवृत्तिमाधादिह हरिभद्रमुनीश्वरस्य तस्य ॥ १८१ ॥
मृदुवचनविधिं च शिक्षयित्वा यतियुगलं प्रजिघाय तत्करे च ।
क्रुध उपशमनाय तस्य गाथात्रयमिह **समरदिनेश**वृत्तबीजम् ॥ १८२ ॥ 15
प्रययतुरथ तेऽपि ( तौ हि ) तस्य राज्ञो नगरमिदं मिलितौ च तस्य सूरेः ।
वच इह कथयांबभूवतुस्तद् गुरुभिरमुं प्रति यन्निदिष्टमिष्टम् ॥ १८३ ॥
प्रतिघगुरुतरोर्भवान् फलोदाहरणमिमा अवधारयस्व गाथाः ।
इति किल वदतोस्तयोः स भक्त्या गुरुलिखिताः समवाचयत् ततस्ताः ॥ १८४ ॥
तथा हि– 20

**गुणसेण-अग्गिसम्मा सीहाणंदा य तह पिआपुत्ता ।**
**सिहि-जालिणि माइ-सुआ धण-धणसिरिमो य पइ-भज्जा ॥ १८५ ॥**
**जय-विजया य सहोअर धरणो लच्छी अ तह पई भज्जा ।**
**सेण-विसेणा पित्तिय उत्ता जम्मम्मि सत्तमए ॥ १८६ ॥**
**गुणचन्द-वाणमन्तर समराइच्च-गिरिसेण पाणो अ ।** 25
**एगस्स तओ मोक्खोऽणन्तो अन्नस्स संसारो ॥ १८७ ॥**
इति चतुरमतिर्व्यमृक्षदेवं हृदि **हरिभद्र**विभुस्तदेतदीदृक् ।
अपि[8] वनमुनिपारणस्य भङ्गे भवनवकेऽप्यनुवर्तते स्म वैरम् ॥ १८८ ॥
पुनरिह मयका[9] तु कोपदावानलबहलार्चिरुदस्तचेतनेन ।
दशबलमतसङ्गिनः प्रपञ्चं विरचयता[10] विनिबर्हिताश्च भूम्नः[11] ॥ १८९ ॥ 30
अतिविरतचिरप्ररूढमिथ्याग्रहसमयैरिव विप्रलब्धचेताः ।
अपि जिनमतबोधमाकलय्यासुकृतवशेन तमःप्रवेशमाधाम् ॥ १९० ॥

---

1 N झटितिरनेन। 2 A B N प्रकृतिकृति°; C प्रकृतिरस्ति। 3 B N यस्य। 4 A ते च। 5 N °तरपरेषु। 6 C बौद्धा। 7 N °जय°। 8 A अपि च मुनि°। 9 N मयकानुकोप°। 10 A N विरचयिता। 11 A C भूम्ना; B भूम्नाः।

नरकगमनदौहृदं हि जीव ! त्यज ननु[1] दौहृदमायतौ दुरन्तम् ।
निजमिह परिबोध्य जीवमित्थं प्रकटमुवाच तपोधनाग्रतोऽसौ ॥ १९१ ॥
इह [2]गुरुजनवत्सलत्वबुद्धेरनृणविधिः किमवाप्यते कथञ्चित् ।
नरकगतिसमीपगामिनं मां प्रति घटते भृशमुद्दिधीर्षया यः ॥ १९२ ॥
5 विविध[3]मथ विरोधमौज्झ्य सूरिर्भृशमभिपृच्छ्य च तं नृपं महेच्छः ।
निरगमदविलम्बितप्रयाणैः समगत शीघ्रमसौ गुरुक्रमाणाम् ॥ १९३ ॥
शिरसि च विनिधाय तान् नतास्योऽगददथ गद्गदगीर्भरः स तत्र ।
गुणविशदविनेयमोहतोऽहम् प्रभुचरणाम्बुजसेवया वियुक्तः ॥ १९४ ॥
श्रुतविहिततपः प्रदाय बाढं मम कलुषं परिशोधयध्वमाशु ।
10 अविनयसदने विनेयपाशे प्रगुणतरां मतिमातनुध्वमुच्चैः ॥ १९५ ॥
गुरुरिह परिरभ्य गाढमेनं कृतवृजिनार्हतपः प्रदाय चावक् ।
कलुष-सुकृतयोर्विधौ समर्था ननु **हरिभद्र**समाः क सन्ति शिष्याः ॥ १९६ ॥
खरतरतपसा विशोषयन्तं[4] तनुमतनुः स विनेययोर्वियोगः ।
परिदहति भृशं मनस्त्वदीयं जलनिधिमौर्व इव प्रकाशकीलः ॥ १९७ ॥
15 अतिशयपरिदूनमेवमम्बा धृतिविधये सुतरामुवाच वाचम् ।
क इव स विरहस्तवार्दनेऽसौ गृहधननन्दनसङ्गवर्जितस्य ॥ १९८ ॥
जिनसमयविचित्रशास्त्रसेवानिपुण ! विशुद्धमते ! स्वकर्मपाकः ।
फलवितरणकृन्निजः परो वा तदिति विडम्बकमेव कोविदानाम् ॥ १९९ ॥
गुरुपदवरिवस्ययाभिरामः सफलय शुद्धतपस्यया स्वजन्म ।
20 शरदि घन इव प्रलीनमेतद् भवति विकर्म यथा तनु[5] त्वदीयम् ॥ २०० ॥
अवगथ **हरिभद्रसूरि**रम्बे ! जडमतिमादृशशिष्यकावलम्बे ! ।
न किमपि मम चेतसो [6]व्यथाकृद् विशदविधेयविनेयमृत्युमुख्यम् ॥ २०१ ॥
दृढमिह निरपत्यता हि दुःखं गुरुकुलमप्यमलं मयि क्षतं किम् ।
इति गदति जगाद तत्र देवी शृणु वचनं मम सूनृतं त्वमेकम् ॥ २०२ ॥
25 नहि तव कुलवृद्धिपुण्यमास्ते ननु त(भ)व शास्त्रसमूहसन्ततिस्त्वम् ।
इति गदितवती तिरोदधे सा श्रमणपतिः स च शोकमुत्ससर्ज ॥ २०३ ॥
मनसि गुरुविरोधवार्द्धिगाथात्रितयमिदं गुरुभिर्गुरुप्रसादात् ।
प्रहितमभिसमीक्ष्य सैष पूर्वं स च **समरार्कचरित्र**मातनान ॥ २०४ ॥
पुनरिह च शतोनमुग्रधीमान् प्रकरणसार्द्धसहस्रमेष चक्रे ।
30 जिनसमयवरोपदेशरम्यं ध्रुवमिति सन्ततिमेष तां च मेने ॥ २०५ ॥
अतिशयहृदयाभिरामशिष्यद्वयविरहोर्मिभरेण तप्तदेहः ।
निजकृतिमिह संव्यधात् समस्तां विरहपदेन युतां सतां स मुख्यः ॥ २०६ ॥

1 N जीवस्य तु मम । 2 N जनगुरु° । 3 N त्रिविध° । 4 C विशोधयन्तं । 5 A ननु; C ननु । 6 A वृथा° ।

§७. प्रकरणनिकरस्य विस्तरार्थं[1] हृदयविबाधक[2]चिन्तयाभिश्रान्तः ।
अणुतरजिनवासनं स **कार्पासिक** इति नामकमैक्षताथ भव्यम् ॥ २०७ ॥
शुभशकुनवशात् स्वकीयशास्त्रप्रसरणकारणमेष तं व्यमृक्षत् ।
तत इह विरलं च **भारतादि**श्रवणसतृष्णमुवाच हृद्यविद्यः ॥ २०८ ॥

तथा हि- 5

**एयं लोइयकव्वं गद्धहलिंडं व[3] बाहिरे मट्ठं[4] ।**
**अन्तो फोडिज्जंतं तुसबुसभुसमीसियं सव्वं ॥ २०९ ॥**

अवददथ वणिग् विवेचयस्व प्रकटमिदं स ततो जगाद सूरिः ।
[5]अनृतभरभृतेष्वहो जनानामितिहासेषु यथा-तथा प्रतीतिः (?) ॥ २१० ॥
इति विशकलनाय मूढतायाः **कितवकथानकपञ्चकं** तदुक्तम् । 10
विषधरवति[6] मंत्रवत्[7] कुमिथ्याग्रहविपविस्तरसंहृतिप्रवीणम् ॥ २११ ॥
श्रवणत इह तस्य जैनधर्मे प्रकटमतिर्बुबुधे ततो जगाद ।
वितरणमुख एष जैनधर्मो द्रविणमृते स विधीयते कथं नु ॥ २१२ ॥
गुरुरथ समुवाच धर्मकृत्याद् द्रविणभरो भविता तव प्रभूतः ।
अवददथ स चेदिदं तदाऽहं सपरिजनः प्रभुगीर्विधायकः स्याम् ॥ २१३ ॥ 15
वदति गुरुरथ त्वमेकचित्तः शृणु बहिरद्यदिनात् तृतीयघस्रे ।
परविषयवणिज्यकारकौघः[8] स्फुटमिह [9]वस्तुनिधानमेष्यतीति ॥ २१४ ॥
तदुप तव गतस्य [10]वस्तुजातं तदथ समोद्धृतितः समर्घमाप्यम् ।
गुरुतरममुतो धनं च भावि व्यवहरणात् सुकृतोदयेन भूम्ना ॥ २१५ ॥
विहितमिह मया हि शास्त्रवृन्दं ननु भवता भुवि पुस्तकेषु लेख्यम् । 20
तदनु यतिजनस्य ढौकनीयं प्रसरति सर्वजने यथा तदुच्चैः ॥ २१६ ॥
सुकृति[11]जनशिरोमणिस्ततो[12]ऽसाविति वचनं विदधे गुरोरलङ्घ्यम् ।
तदनु च तदिदं भवार्णवस्य प्रतरणहेतुतरीसमं प्रवृत्तम् ॥ २१७ ॥
अथ च चतुरशीतिमेकपीठे जिनसदनानि महालयानि तत्र ।
अपरजनमपि प्रबोध्य सूरिः सुमतिरचीकरदुच्चतोरणानि ॥ २१८ ॥ 25
चिरलिखितविशीर्णवर्णभग्नप्रविवरपत्रसमूहपुस्तकस्थम् ।
कुशलमतिरिहोद्दधार जैनोपनिषदिकं स **महानिशीथशास्त्रम्** ॥ २१९ ॥
श्रुतपरिचयतो निजायुरन्तं सुपरिकलय्य गुरुक्रमागतोऽसौ ।
गणविषयनिराश[13]तोत्थचेतःकदनविरागविशेषसंभृताङ्गः ॥ २२० ॥
अनशनमनघं विधाय निर्यामकवरविस्मृतहार्दभूरिबाधः । 30
त्रिदशवन इव स्थितः समाधौ त्रिदिवमसौ समवापदायुरन्ते ॥ २२१ ॥

---

1 C विस्तरार्थे । 2 C विबोधक° । 3 B N च । 4 N सिद्दं । 5 A अमृतभर° । 9 B N विषधर इति । 7 N मंत्र-वत्तु । 8 N °कारकोऽथ । 6 C B वस्त्र° । 10 C वस्त्र° । 11 A C सुकृत । 12 C °स्तथाऽसौ । 13 C निराश्रितोत्थ° ।

इत्थं श्रीहरिभद्रसूरिसुगुरोश्चित्रं चरित्राद्भुतम्
स्मृत्वा विस्मयकारणं पटुतरप्रज्ञालहृद्यं[1] बुधाः ।
मातृकप्राथमकल्पिकावलिधियां जीवातुपाथेयवत्
शृण्वन्तु प्रकटं पठन्तु जयताच्चाचन्द्रसूर्यस्थिति ॥ २२२ ॥
5 श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीहारिभद्री कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽयमष्टाधिकः ॥ २२३ ॥

*

पुरुषोत्तम परमेष्ठिन् गिरीश गणनाथ विबुधवृन्दपते ।
10 प्रद्युम्न ब्रह्मरते सुमनोमय किमसि नहि तपनः ॥ २२४ ॥

॥ इति हरिभद्रसूरिप्रबन्धः* ॥

॥ ग्रन्थ ३५४ अ० ३ । उभयं २०४३ अ० ३ ॥

---

1 B N पूज्यं । * B आदर्श एवोपलभ्यते प्रबन्धसमाप्तिसूचिका पंक्तिरेषा ।

# १०. श्रीमल्लवादिसूरिचरितम् ।

§ १. संसारवार्द्धिविस्ताराम्निस्तारयतु दुस्तरात् । श्री**मल्लवादिसूरि**र्वो यानपात्रप्रभः प्रभुः ॥ १ ॥
गौः सत्तारघना यस्य पक्षाक्षीणलसद्भुवि । अवक्त्रा लक्षभेत्री च जीवामुक्ता सुपर्वभृत् ॥ २ ॥
जडानां निबिडाध्यायप्रवृत्तौ[1] वृत्तमद्भुतम् । प्रमाणाभ्यासतः ख्याते दृष्टान्तः किंचिदुच्यते ॥ ३ ॥
वेणुप्राकारतुङ्गत्वाद् रथेनागच्छतो रवेः । रथाङ्गमिव संलग्नं शकुनीतीर्थनाभिभृत् ॥ ४ ॥
हर्म्यारनिकरैर्युक्तं वप्रनेमिविराजितम् । पुरं श्री**भृगुकच्छा**ख्यमस्ति स्वस्तिनिकेतनम् ॥ ५ ॥
चारुचारित्रपाथोधिशमकल्लोलकेलितः । सदानन्दो **जिनानन्दः** सूरिस्तत्राच्युतः श्रिया[2] ॥ ६ ॥
अन्यदा [3]धनदानाम्निमत्तश्चित्ते छलं वहन् । चतुरङ्गसभावज्ञामज्ञातमदविभ्रमः ॥ ७ ॥
चैत्ययात्रासमायातं **जिनानन्द**मुनीश्वरम् ।
जिग्ये वितंडया बुद्ध्या **नन्दाख्यः** सौगतो मुनिः ॥ ८ ॥–युग्मम् ।
पराभवात् पुरं त्यक्त्वा जगाम **वलभीं** प्रभुः । प्राकृतोऽपि जितोऽन्येन कस्तिष्ठेत् तत्पुरांतरा ॥ ९ ॥
तत्र **दुर्लभदेवी**ति गुरोरस्ति सहोदरी । तस्याः पुत्रास्त्रयः सन्ति ज्येष्ठो[4]**ऽजितयशो**ऽभिधः ॥ १० ॥
द्वितीयो **यक्ष**नामाभून् **मल्ल**नामा तृतीयकः । संसारासारता चैषां मातुलैः प्रतिपादिता ॥ ११ ॥
जनन्या सह ते सर्वे बुद्धा दीक्षामथादधुः । संग्रामे हि तरण्डे कः पाथोधिं न विलंघयेत् ॥ १२ ॥
लक्षणादिमहाशास्त्राभ्यासात् ते कोविदाधिपाः । अभूवन् भूपरिख्याताः प्रज्ञायाः किं हि दुष्करम् ॥ १३ ॥
पूर्वर्षिभिस्तथा ज्ञानप्रवादाभिधपञ्चमात् । **नयचक्रमहाग्रन्थः** पूर्वार्के तमोहरः ॥ १४ ॥
विश्रामरूपास्तिष्ठन्ति तत्रापि द्वादशारकाः । तेषामारम्भपर्यन्ते क्रियते चैत्यपूजनम् ॥ १५ ॥
किंचित्पूर्वगतत्वाच्च नयचक्रं विनाऽपरम् ।
पाठिता गुरुभिः सर्वं कल्याणीमतयोऽभवत् ( न् ) ॥ १६ ॥–त्रिभिर्विशेषकम् ।
एष **मल्लो** महाप्राज्ञस्तेजसा हीरकोपमः । उन्मोच्य पुस्तकं बाल्यात् स स्वयं वाचयिष्यति ॥ १७ ॥
ततस्योपद्रवेऽस्माकमनुतापोऽतिदुस्तरः । प्रत्यक्षं तज्जनन्यास्तज्जगदे गुरुणा च सः ॥ १८ ॥
वत्सेदं पुस्तकं पूर्वं निषिद्धं मा विमोचयेः । निषिध्येति[5] विजहुस्ते तीर्थयात्रां चिकीर्षवः ॥ १९ ॥
मातुरप्यसमक्षं स पुस्तकं वारितद्विषन् । उन्मोच्य[6] प्रथमे पत्रे आर्यामेनामवाचयत् ॥ २० ॥

तथा हि–

**विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकमवोचत् ।**
**जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् ॥ २१ ॥**

अर्थं चिन्तयतोऽस्याश्च पुस्तकं श्रुतदेवता । पत्रं चाच्छेदयामास दुरन्ता गुरुगीःक्षतिः ॥ २२ ॥
इतिकर्तव्यतामूढो **मल्ल**श्चिल्लत्वमासजत् । अरोदीच्छैशवस्थित्या किं बलं दैवतैः सह ॥ २३ ॥
पृष्टः किमिति मात्राह मद्वृत्तात् पुस्तकं ययौ । संघो विषादमापेदे ज्ञात्वा तत्तेन निर्मितम् ॥ २४ ॥
आत्मनः स्खलितं साधु समाचयते[7] स्वयम् । विचार्येति सुधी**र्मल्ल** आराध्नोत् श्रुतदेवताम् ॥ २५ ॥
**गिरिखण्डल**नामास्ति पर्वतस्तद्गुहान्तरे । रूक्षनिष्पावभोक्ता स [8]षष्ठपारणकेऽभवत् ॥ २६ ॥

1 N निबिडाध्याय प्रवृत्तं । 2 C तत्राच्युतश्रियः । 3 A धान्यदानाप्ति° । 4 N जिनयशो° । 5 N निषिद्धेति । 6 N उन्मार्ज्य । 7 B N समाचरयते । 8 N षष्ठः पार° ।

एवमभ्यर्दितः[1] संघो वात्सल्याज्जननीयुतः । ईदृक् श्रुतस्य पात्रं हि [2]दुःप्रापं मा विशीर्यताम् ॥ २७ ॥
विकृतिं ग्राहितस्तेन चतुर्मासिकपारणे । साधवस्तत्र गत्वाऽस्य प्रायच्छन् भोजनं मुनेः ॥ २८ ॥
श्रुतदेवतया संघसमाराधितया ततः । ऊचेऽन्यदा[3] परीक्षार्थं 'के मिष्टा' इति भारती ॥ २९ ॥
'वल्ला' इत्युत्तरं प्रादान् **मल्लः** फुल्लतपोनिधिः । षण्मासान्ते[4] पुनः प्राह वाचं 'केनेति' तत्पुरः ॥ ३० ॥
5 उक्ते 'गुड-घृतेनेति' धारणातस्तुतोष सा । वरं वृणिवति च प्राह तेनोक्तं यच्छ पुस्तकम् ॥ ३१ ॥
श्रुताधिष्ठायिनी प्रोचेऽवहितो मद्वचः शृणु । ग्रन्थेऽत्र प्रकटे कुर्युर्द्वेषिदेवा उपद्रवम् ॥ ३२ ॥
श्लोकेनैकेन शास्त्रस्य सर्वमर्थं ग्रहीष्यसि । इत्युक्त्वा सा तिरोधत्त गच्छं **मल्लश्च** सङ्गतः ॥ ३३ ॥
**नयचक्रं** नवं तेन श्लोकायुतमितं कृतम् । प्राग्ग्रन्थार्थप्रकाशेन सर्वोपादेयतां ययौ ॥ ३४ ॥
शास्त्रस्यास्य प्रवेशं च[5] संघश्चक्रे महोत्सवात् । हस्तिस्कन्धाधिरूढस्य प्रौढस्येव[6] महीशितुः ॥ ३५ ॥
10 § २. अन्यदा श्री**जिनानन्द**प्रभुस्तत्रागमच्चिरात् । सूरित्वे स्थापितो **मल्लः** श्राद्धैरभ्यर्थ्य सद्गुरुम् ॥ ३६ ॥
तथा [7]ऽ**जितयशो**नामा प्रमाणग्रन्थमादधे । **अल्लभूप**[8]सभेवादिश्री**नन्दक**गुरोर्गिरा ॥ ३७ ॥
शब्दशास्त्रे च **विश्रान्तविद्याधर**वराभिधे । न्यासं चक्रेऽल्पधीवृन्दबोधनाय स्फुटार्थकम् ॥ ३८ ॥
**यक्षेण** संहिता चक्रे निमित्ताष्टाङ्गबोधनी । सर्वान् प्रकाशयत्यर्थान् या दीपकलिका यथा ॥ ३९ ॥
**मल्लः** समुल्लसन्मल्लीफुल्लवेल्लद्यशोनिधिः । शुश्राव स्थविराख्यानात् न्यक्कारं बौद्धतो गुरोः[9] ॥ ४० ॥
15 अप्रमाणैः प्रयाणैः स **भृगुकच्छं** समागमत् । संघः प्रभावनां चक्रे प्रवेशादिमहोत्सवैः ॥ ४१ ॥
**बुद्धानन्द**स्ततो बौद्धानन्दमद्भुतमाचरत् । श्वेताम्बरो मया वादे जिग्ये दर्पं वहन्नमुम् ॥ ४२ ॥
यस्योन्नमत्यपि भ्रूर्नावलेपभरभारिता । जगद् भ्रष्टं कृपापात्रं मन्यते स धरातलम् ॥ ४३ ॥
जैनर्षीनागतान् श्रुत्वा विशेषादुपसर्गकृत् । संघस्याथ महाकोशो विशां वृन्दैरवीवदत् ॥ ४४ ॥
पूर्वजः श्वेतभिक्षूणां वादमुद्राजयोद्धुरः । स्याद्वादमुद्रया सम्यगजेयः परवादिभिः ॥ ४५ ॥
20 परं सोऽपि मयात्मीयसिद्धान्तैः प्रकटीकृतैः । कलितश्चुलुके कुम्भोद्भवेनेव पयोनिधिः ॥ ४६ ॥—युग्मम् ।
किं करिष्यति बालोऽसावनालोकितकोविदः । गेहेनर्दी सारमेय इवासारपराक्रमः ॥ ४७ ॥
काचित्तस्यापि चेच्छक्तिस्ततो भूपसभापुरः । स्वं दर्शयतु येनैणं वृकवद् ग्रासमानये ॥ ४८ ॥
**मल्लाचार्य** इति श्रुत्वा लीलया सिंहवत् स्थिरः । गम्भीरगीर्भरं प्राह ध्वस्तगर्वोऽद्विपन्नृणाम् ॥ ४९ ॥
जैनो मुनिः शमी कश्चिदविवादावदातधीः । जितो जित इति स्वेच्छावादोऽयं किं घटापटुः ॥ ५० ॥
25 अथवास्तु मुधा चित्तावलेपं शल्यवद् दृढम् । अलमुद्धर्तुमेतस्य सज्जोऽस्मि विलसज्जयः ॥ ५१ ॥
सज्जनो मे सुहृच्चापि[10] ज्ञास्ये स्थास्यति[11] चेत्पुरः । तिष्ठन् स्वकीयगेहान्तर्जनो भूपेऽपि कद्वदः ॥ ५२ ॥
प्रत्यक्षं प्राश्निकानां तन्मध्येभूपसभं भृशम् । अनूद्यतां यथा प्रज्ञाप्रामाण्यं लभ्यते ध्रुवम् ॥ ५३ ॥
इत्याकर्ण्य वचः स्मित्वा **बुद्धानन्दो**ऽप्युवाच च । वावदूकः शिशुप्रायः[12] कस्तेन सह संगरः ॥ ५४ ॥
अस्तु वासौ निराकृत्य एव मे द्विषदन्वयी । ऋणस्तोकमिवासाध्यः कालेनासौ हि दुर्जयः ॥ ५५ ॥
30 ततः क्रूरे मुहूर्ते च तौ वादि-प्रतिवादिनौ । संसद्याजग्मतुः सभ्याः पूर्ववादं लघोर्ददुः ॥ ५६ ॥
**मल्लाचार्यः** स षण्मासीं यावत् प्राज्ञार्यमावदत् । **नयचक्रमहाग्रन्था**भिप्रायेणात्रुटद्वचाः ॥ ५७ ॥
नावधारयितुं शक्तः सौगतोऽसौ गतो गृहम् । मल्लेनाप्रतिमल्लेन जितमित्यभवन् गिरः ॥ ५८ ॥

---

1 N B °भ्यर्हितसंघो । 2 N दुःप्रायं भावि शीर्यताम् । 3 N तदा । 4 C °मासान्ते । 5 N इ । 6 N B प्रौढस्य च । 7 N जिनयशो° । 8 C अल्लूभूप° । 9 A गुरौ । 10 B N सुहृद्वापि । 11 B C स्मास्यसि । 12 A वावदूकशिशुप्रायः; C °शिशुः प्रायः ।

**मल्लाचार्ये** दधौ पुष्पवृष्टिं श्रीशासनामरी । महोत्सवेन भूपालः स्वाश्रये तं न्यवेशयत् ॥ ५९ ॥
**बुद्धानन्द**परीवारमपभ्राजनया ततः । राजा निर्वासयन्नत्र वारितोऽर्थनपूर्वकम् ॥ ६० ॥
बिरुदं तत्र 'वादी'ति ददौ भूपो मुनिप्रभोः । **मल्लवादी** ततो जातः सूरिर्भूरिकलानिधिः ॥ ६१ ॥
बुद्धानन्दो निरानन्दः शुचा निष्प्रतिभो भृशम् । रात्रौ प्रदीपमादाय प्रारेभे लिखितुं ततः ॥ ६२ ॥
तत्रापि विस्मृतिं याते पक्षहेतुकदम्बके * । अनुत्तरो भयाल्लज्जावैशसात् स्फुटिते हृदि ॥ ६३ ॥ 5
मृत्युं प्राप खटीहस्तो राज्ञा[1] प्रातर्व्यलोक्यत[2] । **मल्लेन** च ततोऽशोचि वाग्मसौ हा दिवं गतः ॥ ६४ ॥
कस्य प्राणादसौ प्रज्ञां प्रगल्भां[3] स्वां प्रबुद्धवान् । अवज्ञाता शिशुत्वान् नः स्वयमीदृक् च कातरः ॥६५॥
**वलभ्याः श्रीजिनानन्दः** प्रभुरानायितस्तदा । संघमभ्यर्थ्य पूज्यः स्वः[4] सूरिणा **मल्लवादिना** ॥६६॥
माता **दुर्लभदेवी**ति तुष्टा चारित्रधारिणी । बन्धुना गुरुणाऽभाणि त्वं स्थिता पुत्रिणीधुरि ॥ ६७ ॥
गुरुणा गच्छभारश्च योग्ये शिष्ये निवेशितः । **मल्लवादि**प्रभौ को हि स्वौचित्यं प्रविलङ्घयेत् ॥ ६८ ॥ 10
**नयचक्रमहाग्रन्थः** शिष्याणां पुरतस्तदा । व्याख्यातः परवादीभकुम्भभेदनकेसरी ॥ ६९ ॥
**श्रीपद्मचरितं** नाम **रामायण**मुदाहरत् । चतुर्विंशतिरेतस्य सहस्रा ग्रन्थमानतः ॥ ७० ॥
तीर्थं प्रभाव्य वादीन्द्रान् शिष्यान् निष्पाद्य चामलान् । गुरु-शिष्यौ गुरुप्रेमबन्धेनेवे[5]यतुर्दिवम् ॥ ७१ ॥
**बुद्धानन्द**स्तदा मृत्वा विपक्षव्यन्तरोऽजनि । जिनशासनविद्वेषिप्रान्तकालमतेरसौ ॥ ७२ ॥
तेन प्राग्वैरतस्तस्य ग्रन्थद्वयमधिष्ठितम् । विद्यते पुस्तकस्थं तत् वाचितुं स न यच्छति ॥ ७३ ॥ 15

श्रीमल्लवादिप्रभुवृत्तमेतन् मचेतनावल्लिनवाम्बुदाभम् ।
व्याख्यान्तु शृण्वन्तु कविप्रधानाः प्रसन्नदृष्ट्या च[6] विलोकयन्तु ॥ ७४ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीमल्लवाद्यद्भुतं 20
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो नवाग्रोऽभवत् ॥ ७५ ॥

*

[ अत्र C सञ्ज्ञक आदर्शे निम्नगतमेकमधिकं पद्यं लिखितमुपलभ्यते– ]

श्रीनागेन्द्रकुलैकमस्तकमणि[ः] प्रामाणिकग्रामणी-
रासीदप्रतिमल्ल एव भुवने श्रीमल्लवादी गुरुः । 25
प्रोद्यत्प्रातिभवैभवोद्भवमुदा श्रीशारदा सूनवे
यस्मै तं निजहस्तपुस्तकमदाज्जैत्रं त्रिलोक्या अपि ॥–ऋषिमण्डलात् ।

## ॥ इति मल्लवादिप्रबन्धः† ॥

॥ ग्रन्थ ७७ । उभयम् ११२० ॥

---

* 'आक करवा वीसरी गया' इति B टिप्पणी । 1 C राज्ञा । 2 A विलोकत; C व्यलोकत । 3 C प्रगल्भं । 4 C स्वसूरिणा । 5 C निबन्धेनेवेयतुः; N निबन्धेनेयतुः । 6 A ऽथ । † B आदर्शे एवैयं प्रबन्धसमाप्तिसूचिका पंक्तिः प्राप्यते ।

# ११. श्रीवप्पभट्टिसूरिचरितम् ।

§ १. **बप्पभट्टिः** श्रिये श्रीमान् यद्वृत्तगगनाङ्गणे । खेलति स्म गतायातै राजा सूरः[1] कविर्बुधः ॥ १ ॥
पीत्वा यद्गोरसं तृप्ता दृप्यन्तः[2] कवितर्णकाः* । बिभ्राणाः शृंगितां विज्ञगोपालैरपि[3] दुर्दमाः ॥ २ ॥
तस्यैव चरितं किञ्चित् कीर्तयिष्ये यथाश्रुतम् । मत्प्रज्ञामुकुगी(रो ?)द्योति साधुशृङ्गारभूषणम् ॥ ३ ॥
5 अस्ति स्वस्तिनिधिः श्रीमान देशो **गूर्जर**संज्ञया । अनुत्सेकविवेकाढ्यलोकः शोकाचलस्वरुः[4] ॥ ४ ॥
यदेकांश[5]प्रतिच्छन्दस्वरभ्रमुकुरस्थितम । गौरीशमुनिबाहुल्यात् तत्पुरं **पाटला**भिधम् ॥ ५ ॥
**जितशत्रु**र्महीनाथः पाथःपतिगभीरिमा । तत्रास्ति [6]त्रासिताशेषबाह्यान्तररिपुव्रजः ॥ ६ ॥
चित्रशास्त्ररहस्यालिकन्दकन्दलनाम्बुदः । आश्लिष्टपरमब्रह्मामन्दपीयूषसागरः ॥ ७ ॥
**मोढाख्य**प्रौढगच्छश्रीविवोढानूढमूढतः । श्री**सिद्धसेन** इत्यासीन्मुनीन्द्रस्तत्र विश्रुतः ॥ ८ ॥–युग्मम ।
10 विश्वविद्यावदातश्रीर्मान्यः क्षितिभृतामपि । **मोढेरे** श्रीमहावीरं प्रणन्तुं सोऽन्यदाययौ ॥ ९ ॥
प्रणम्य विधिवत् तीर्थं पृथगाश्रयसंश्रितः । निशायां योगनिद्राभृद् ददर्श स्वप्नमीदृशम् ॥ १० ॥
उन्मीलँल्लीलया नेत्रे यत्केसरिकिशोरकः । आरूढश्चैत्यशृङ्गाग्रमुत्फालः सत्त्वशालितः ॥ ११ ॥
इति दृष्ट्वा जजागारानगारपतिरद्भुतम् । प्रीतश्च श्रावयामास प्रातर्मुनिमतल्लिकाः ॥ १२ ॥
कल्याणानामुपादानं हेतुत्वं विनयस्य तैः । ख्यापयद्भिर्नतैः पृष्ट आख्यादर्थं च तत्पुरः ॥ १३ ॥
15 शिष्योऽन्यवादिकुम्भीन्द्रकुम्भनिर्भेदनोत्तमः । भाग्यैः संघस्य कोऽप्यद्य समेष्यति महामतिः ॥ १४ ॥
भाविप्रभावसंसूचिस्वप्नानन्दाभिनन्दितैः । तैः समं सूरिरागच्छज्जैनालयमनालयः ॥ १५ ॥
त्रिः प्रदक्षिणयित्वा च यावन्नाथं विवन्दिषुः । तावत्षड्वार्षिको बाल एकस्तत्पुर आगमत् ॥ १६ ॥
कस्कः कौतस्कुतस्त्वं भो ! असौ पृष्टस्तदा[7]ऽवदत् । [8]**पञ्चालदेश्य-बप्पाख्य**पुत्रोऽहं **भट्टि**देहभूः ॥१७॥
**सूरपालाख्य**या शत्रून् निघ्नन पित्रा निवारितः । अजानतेति वात्सल्यादहेतुर्विक्रमे वयः ॥ १८ ॥
20 एकोऽम्बामप्यनापृच्छ्यानुशयातिशयात्ततः । आगमं प्रभुपादान्ते प्रान्ते स्वस्नेहतः स्थितः ॥ १९ ॥
अस्यामानुष्यकं तेजो ध्यात्वेति गुरुभिस्ततः । किं त्वं नोऽन्तेऽवतिष्ठासुरित्यजल्प्यत हर्षतः ॥ २० ॥
मद्भाग्यैः फलितं पूज्या इत्युक्त्वा सोऽप्यवस्थितः[9] । अलिः किं नाम नो तिष्ठेद् विकाशिनि सरोरुहे ॥२१॥
एकशः श्रुतमात्रेणावधारयति निश्चलम् । अनुष्टुभां सहस्रं तु प्रज्ञायां तस्य का कथा ॥ २२ ॥
जडदुस्तर्कसंक्लिष्टा देवी वागधिदैवतम । दुर्बोधशास्त्रहृद्भेदि सुहृत्त्वं यस्य वाञ्छति ॥ २३ ॥
25 प्रेक्षाभियोगसन्तुष्टाः प्रभवस्तस्य पैतृके । गत्वा **डुंबाउधी**ग्रामे[10] पितरौ प्रार्थयन्त ते ॥ २४ ॥
स प्राह यातयामो[11]ऽहमेतदंबैकपुत्रका[12] । आशाधारोऽयमावाभ्यां कथं मोक्तुं हि शक्यते ॥ २५ ॥
निर्बन्धो यदि पूज्यानां तदा नावभिधां[13] यदि । विश्रुतां **बप्पभट्टी**ति कुरुध्वे तत्सुतोऽस्तु वः ॥ २६ ॥
ओमित्युक्ते जगत्पूज्यैः श्रद्धालुनिवहस्तयोः । आजन्मकसि(शि)पु[14] प्रादान्महदास्था न निष्फला[15] ॥२७॥
**शताष्टके च वर्षाणां गते विक्रमकालतः । सप्ताधिके राधशुक्लतृतीयादिवसे गुरौ ॥ २८ ॥**
30 **मोढेरे** ते विहृत्यामुं दीक्षित्वा नाम चादधुः । स्वाख्या त्रिकैकादशकाद् **भद्रकीर्ति**रिति श्रुतम् ॥ २९ ॥

---

1 A B °शूरः । 2 N B अप्यन्तः । * 'वाछडा' इति B टिप्पणी । 3 A गोपालैरिव । 4 A शोकाचलस्वरुः; N °चलस्तरुः । 5 A यदेकांशे । 6 N नाचिता° । 7 A तथावदत् । 8 B C पाञ्चाल° । 9 A C °प्यवाम्थित । 10 N दुंबातिधीग्रामे । 11 N याचयामो । 12 A °पुत्रिका; N पुत्रकः । 13 A नवविधां । 14 A C °कसिपुः । 15 A निर्मला ।

तत्पित्रोः प्रतिपन्नेन पूर्वाख्या तु प्रसिद्धिभूः । शिष्यमौलिमणेरस्य कलासङ्केतवेश्मनः ॥ ३० ॥
संघश्च तद्गुणग्रामरामणीयकरञ्जितः । विदधेऽभ्यर्थनां तेषामत्रावस्थानहेतवे ॥ ३१ ॥
योग्यतातिशयं चास्य ज्ञात्वा सद्गुरवस्ततः । सारस्वतं महामन्त्रं तत्रस्थास्तस्य ते ददुः ॥ ३२ ॥
परावर्त्तयतस्तस्य निशीथे तं सरस्वती । स्वर्गङ्गास्रोतसि स्नान्त्यनावृतासीद् रहोभुवि ॥ ३३ ॥
तन्मन्त्रजापमाहात्म्यात् तादृग्रूपा[1] समाययौ । ईषद्दृष्ट्वा च तां वक्त्रं परावर्त्तयति स्म सः ॥ ३४ ॥ 5
स्वं रूपं विस्मरन्ती च प्राह वत्स ! कथं मुखम् । विवर्त्तसे भवन्मंत्रजापात् तुष्टाहमागता ॥ ३५ ॥
वरं वृणिष्वेति तत्प्रोक्तो **बप्पभट्टि**रुवाच च । मातर् ! विसदृशं रूपं कथं वीक्षे[2] तवेदृशम् ॥ ३६ ॥
स्वां तनुं पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा । अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ३७ ॥
उचैश्च मन्त्रमाहात्म्यं येनाहं गतचेतना । ध्यायन्ती दृढतोषेण त्वत्पुरः समुपस्थिता ॥ ३८ ॥
वरेऽपि निस्पृहे त्वत्र दृढं चित्रातिरेकतः । गत्यागत्योर्मम स्वेच्छा त्वदीया निर्वृतो भव ॥ ३९ ॥ 10

§ २. अन्यदा तत्र संस्थानां (ग्नो ?) **भद्रकीर्त्ति**र्बहिर्गतः । वृष्टौ देवकुलं श्रित्वा तस्थौ स स्थैर्यसुस्थितः ॥ ४० ॥
तत्रस्थस्य पुमानेको नाकिपाकविडंबकः । समगंस्त प्रशस्तश्रीर्वृष्टिव्याकुलितस्तदा ॥ ४१ ॥
श्यामाश्मोत्कीर्णवर्णोघा सहारहृदिवांगना । स्वस्तिप्रशस्तिरत्रास्ति विहस्तितजडस्थितिः ॥ ४२ ॥
काव्यानि वाचयामास महार्थानि सुधीरसौ । सख्याद् व्याख्यापयामास [3]प्रत्यग्राद् **बप्पभट्टितः** ॥४३॥
तदाख्यारंजितस्वान्तः शान्ते वर्षेऽतिहर्षतः । ययौ सहैव वसतौ वसतौ तत्र च स्थितः ॥ ४४ ॥ 15
ततो गुरुभिराशीर्भिरानन्द्य समपृच्छ्यत । आमुष्यायणतां स्वस्याचख्यौ व्रीडावशानतः[4] ॥ ४५ ॥
वयं**मौर्य**महागोत्रसंभूतस्य महाद्युतेः । श्री**चन्द्रगुप्त**भूपालवंशमुक्तामणिश्रियः ॥ ४६ ॥
**कान्यकुब्जयशोवर्म्म**भूपतेः सुयशोऽङ्गभूः । पित्रा शिक्षावशात् किंचिदुक्तः कोपादिहागमम् ॥ ४७ ॥
अलेखीद् **आम**नाम स्वं क्षितौ खटिकया ततः । स्वनामाग्रहणेनास्य विवेकात् ते चमत्कृताः ॥ ४८ ॥
व्यमृशन् सूरयस्तत्र नखच्छोटन[5]पूर्वकम् । पूर्वं श्री**रामसैन्ये**ऽसौ दृष्टः पाण्मासिकः किल ॥ ४९ ॥ 20
पीलुवृक्षमहाजाल्यां वस्त्रान्दोलकसंस्थितः । अचलच्छाययाऽस्माभिर्विज्ञातः पुण्यपूरुषः ॥ ५० ॥
ततस्तज्जननी वन्यफलवर्गं विचिन्वती । अस्माभिर्गदिता वत्से ! का त्वं किं वा भवत्कुलम् ॥ ५१ ॥
कथमीदृगवस्था च सर्वमाख्याहि नः पुरः । विश्वस्ता[6] यद्वयं त्यक्तसंगा[7] मुक्तपरिग्रहाः ॥ ५२ ॥
साऽवादीत् तातपादानां किमकथ्यं ततः प्रभो ! । श्री**कन्यकुब्ज**भूपाल**यशोवर्म**कुटुम्बिनी ॥ ५३ ॥
अहं सुतेऽत्र गर्भस्थे सपत्न्या मत्सरोदयात् । पुरा लब्धवरं प्रार्थ्य नृपान्निर्वासितास्म्यहम् ॥ ५४ ॥ 25
ततोऽनुशयतो हित्वा पितृ-श्वशुरमन्दिरे । स्थाने व आगमं वन्यवृत्त्या वर्त्ते प्रभोऽधुना ॥ ५५ ॥
श्रुत्वेति सान्त्विताऽस्माभिश्चैत्यशुश्रूषया स्थिरा । तिष्ठ बालं प्रवर्द्धस्व जनकस्येव वेश्मनि ॥ ५६ ॥
तत्सपत्नी च केनापि कालेन व्यनशत् स्वयम् । सा च राज्ञा चरैः शोधयित्वा पश्चादनीयत[8] ॥ ५७ ॥
प्राच्यासंख्यगुणेनाथ मानेन बहुमानिता । वयं चात्र ततो देशाद् भूमावस्यां विजह्रिम ॥ ५८ ॥
इति श्रुतश्च वृत्तान्तस्तद्देश्यपुरुषव्रजात् । अनेन सांप्रतं भाव्यं तत्पुत्रेणैव धीमता ॥ ५९ ॥ 30
यदाकृतिः शरीरस्य लक्षणानीदृशानि च । नर्न्ने नृपसुतं पूज्या इति ध्यात्वाभ्यधुस्ततः ॥ ६० ॥
तत्रास्स्व वत्स ! निश्चिन्तो निजेन सुहृदा समम् । शीघ्रं गृहाण शास्त्राणि संगृहाणामलाः कलाः ॥ ६१ ॥

---

1 N °तद्रूपा सा। 2 A B C वीक्ष्ये। 3 N प्रत्यगाद्। 4 N वशाननः। 5 C °छोदन°। 6 A विश्वस्था। 7 A संगात्। 8 N °दनायिता।

नृपः प्राह शमस्तादृक् शक्तिश्चाप्यतिमानुषी । देवीदेवकृताधारं[1] विना कस्येदृशं महः ॥ १४३ ॥
देशः पुरमहं धन्यः कृतपुण्यश्च वासरः । यत्र ते वदनं प्रैक्षि प्रभो ! प्रातिभसप्रभम्[2] ॥ १४४ ॥
आदेशं सुकृतावेशं प्रयच्छ स्वच्छतानिधे ! । आजन्मरक्षादक्षः स्याद् यथा मे त्वदनुग्रहः ॥ १४५ ॥
श्रुत्वेति भूपतेर्वाचं प्राहुस्ते यदकिंचनाः । [3]लक्ष्मीनामुपयोगं न[4] कुत्राप्यर्थे विदध्महे ॥ १४६ ॥
परं श्रीमन् गुणाम्भोधे ! प्रशाधि वसुधामिमाम् । जैनधर्म्मं हताक्षेमं परीक्ष्य परिपालय ॥ १४७ ॥ 5
अथावोचन्महीनाथः[5] पान्थो जैनादृते पथि । अदर्शनादियत्कालं पूज्यानां वञ्चिता वयम् ॥ १४८ ॥
अहो ममावलेपोऽभूद् ब्राह्मणा एव सत्कलाः । देवान् सन्तोष्य यैः स्वीयो दर्शितः प्रत्ययो मम ॥१४९॥
विवदानावहंकारान्नैतावुपरतौ क्वचित् । दर्पायैव न बोधाय या विद्या सा मतिभ्रमः ॥ १५० ॥
येषां प्रभावः सर्वातिशायी प्रशम ईदृशः । सन्तोषश्च तदाख्यातो धर्म्मः शुद्धः परीक्षया[6] ॥ १५१ ॥
तन्मया भवतामेवोपदेशः संविधीयते । अतःपरं कटुद्रव्यं त्यक्त्वा स्वाद्यं हि गृह्यते ॥ १५२ ॥ 10
तत आदेशपीयूषपोषात् तृप्तं कुरुष्व माम् । राज्ञो वाचमिति श्रुत्वा सूरिः प्रण्यगदद् गिरम् ॥ १५३ ॥
दीनपात्रौचितीभेदात् त्रिधा दानरुचिर्भव । जीर्णान्युद्धर चैत्यानि बिम्बानि च विधापय ॥ १५४ ॥
आह मन्त्री प्रभो विप्रप्रातिभं कज्जलोज्ज्वलम् । जैनवाचंयमादेशक्षीरेणैव विलुप्यते ॥ १५५ ॥
इत्थं धर्म्मोपदेशं च प्रदेशमिव सद्व्रतेः । तेऽथ प्रदाय भूपाय संययुः स्वाश्रयं तदा ॥ १५६ ॥
सर्वोपद्रवनिर्नाशी 'भक्तामर' महास्तवः । तदा तैर्विहितः ख्यातो वर्त्ततेऽद्यापि भूतले ॥ १५७ ॥ 15

§ ६. कदापि कर्म्मवैचित्र्यात् तेषां चित्ररुजाभवत् । कर्म्मणा पीडिता यस्मात् शलाकापुरुषा अपि ॥१५८॥
धरणेन्द्रस्मृतेरायात् पृष्टोऽनशनहेतवे । अवादीदायुरद्यापि स तत् संह्रियते कथम् ॥ १५९ ॥
यतो भवादृशामायुर्बहुलोकोपकारकम् । अष्टादशाक्षरं मन्त्रं ततस्तेषां समार्पयत् ॥ १६० ॥
ह्रियते स्मृतियोगेन[7] रोगादि नवधा भयम् । अन्तर्ययौ ततः श्रीमान् धरणो धरणीतलम् ॥ १६१ ॥
ततस्तदनुसारेण स्तवनं विदधे प्रभुः । ख्यातं 'भयहरं' नाम तदद्यापि प्रवर्त्तते ॥ १६२ ॥ 20
हेमन्तशतपत्रश्रीर्देहोऽस्ताघमहोनिधिः । सूरेरजनि तस्याहो सुलभं तादृशां ह्यदः ॥ १६३ ॥–युग्मम् ।
सायं प्रातः पठेदेतत् स्तवनं यः शुभाशयः । उपसर्गा व्रजन्त्यस्य विविधा[8] अपि दूरतः ॥ १६४ ॥
**मानतुङ्ग**प्रभुः श्रीमानुद्योतं जिनशासने । अनेकधा विधायैवं शिष्यान्निष्पाद्य सन्मतीन् ॥ १६५ ॥
द्वेधा **गुणाकरं** शिष्यं पदे स्वीये निवेश्य च । इङ्गिनीमथ संप्राप्यानशनी दिवमभ्यगात् ॥ १६६ ॥

**इत्थं श्रीमानतुङ्गप्रभुचरितमतिस्थैर्यकृज्जैनधर्म-** 25
**प्रासादस्तम्भरूपं सुकृतभरमहापट्टविष्टम्भहेतु ।**
**श्रुत्वा कुत्रापि किंचिद् गदितमिह मया संप्रदायं च लब्ध्वा**
**शोध्यं मेधाप्रधानैः सुनिपुणमतिभिस्तच्च नोत्प्रासनीयम् ॥ १६७ ॥**
**श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-**
**चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।** 30
**श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीमानतुङ्गाद्भुतं**
**श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽभवद् द्वादशः ॥ १६८ ॥**

॥ ग्रंथाग्रं १७४, अ० ३ । उभयं ३११४ ॥

1 N देवदेवी° । 2 N प्रातिभसंनिभम् । 3 N लक्ष्मीनां । 4 N च । 5 N महीपालः । 6 A धर्मेशुद्धपरीक्षया । 7 D N स्मृतितोयेन । 8 A त्रिविधा ।

# १३. श्रीमानदेवसूरिचरितम् ।

§ १. सूरेः श्री**मानदेव**स्य प्रभावाम्भोनिधिर्नवः । सदा यत्क्रमसेविन्यौ ते जया-विजये श्रियौ ॥ १ ॥
निर्वृतिं यत्क्रमाम्भोजगुणानुचरणाद् दधुः । गतिं मनोहरां हंसा **मानदेवः** स वः श्रिये ॥ २ ॥
तद्वृत्तसिन्धुतः किंचिदेकदेशं विभाव्य च । आख्यानपण्यविस्तारात् तरिष्यामि स्वमूढताम् ॥ ३ ॥
5 अस्ति **सप्तशतीदेशो** निवेशो धर्म्मकर्म्मणाम् । यद्दानेशभिया भेजुस्ते राजशरणं गजाः ॥ ४ ॥
तत्र **कोरंटकं**[1] नाम पुरमस्त्युन्नताश्रयम् । द्विजिह्वविमुखा यत्र विनतानन्दना जनाः ॥ ५ ॥
तत्रास्ति श्रीमहावीरचैत्यं श्चैत्यं दधदृढम् । कैलासशैलवद्भाति सर्वाश्रयतयानया ॥ ६ ॥
उपाध्यायोऽस्ति तत्र श्री**देवचन्द्र** इति श्रुतः । विद्वद्वृन्दशिरोरत्नं तमस्ततिहरो जने ॥ ७ ॥
आरण्यकतपस्यायां नमस्यायां जगत्यपि । सक्तः शक्रान्तरङ्गारिविजये भवतीरभूः ॥ ८ ॥
10 **सर्वदेव**प्रभुः सर्वदैव सद्ध्यानसिद्धिभृत् ।
**सिद्धक्षेत्रे**[2] यियासुः श्री**वाराणस्याः**[3] समागमत् ॥ ९ ॥–युग्मम् ।
बहुश्रुतपरीवारो विश्रान्तस्तत्र वासरान् । कांश्चित्प्रबोध्य तं चैत्यव्यवहारममोचयत् ॥ १० ॥
स पारमार्थिक तीव्रं धत्ते द्वादशधा तपः । उपाध्यायस्ततः सूरिपदे पूज्यैः प्रतिष्ठितः ॥ ११ ॥
श्री**देवसूरि**रित्याख्या तस्य ख्यातिं ययौ किल । श्रूयन्तेऽद्यापि वृद्धेभ्यो वृद्धास्ते **देवसूरयः** ॥ १२ ॥
15 श्री**सर्वदेव**सूरीशः श्री**मच्छत्रुञ्जये** गिरौ । आत्मार्थं साधयामास श्रीनाभेयैकवासनः ॥ १३ ॥
चारित्रं निरतीचारं ते श्रीमद्देवसूरयः । प्रतिपाल्य निवेश्याथ सूरिं **प्रद्योतनं**[4] पदे ॥ १४ ॥
अन्तेऽनशनमाधाय ते सदाराद्धसंयमाः । सम्यगाराधनापूर्वं दैवीं श्रियमशिश्रियन् ॥ १५ ॥

§ २. अथो विजहुर्नड्डूले श्री**प्रद्योतन**सूरयः । तेषां परोपकारायावतारो हि भवेत् क्षितौ ॥ १६ ॥
तत्र श्री**जिनदत्तो**ऽस्ति ख्यातः श्रेष्ठी धनेश्वरः । सर्वसाधारणं यस्य मानसं मानदानयोः ॥ १७ ॥
20 **धारिणी**ति[5] प्रिया तस्य धर्मे निबिडवासना । वर्त्तते व्यवहारेण द्वयोऽस्तु पुरुषार्थयोः ॥ १८ ॥
तत्पुत्रो **मानदेवो**ऽस्ति मानवानप्यमानरुक् । वैराग्यरञ्जितस्वान्तः प्रान्तभूरान्तरद्विषाम् ॥ १९ ॥
श्री**प्रद्योतन**सूरीणामन्यदोपाश्रयेऽगमत् । ते धर्म्मं तस्य चाचख्युस्तरण्डं भवसागरे ॥ २० ॥
संसारासारतां बुद्ध्वा गुरुपादान् व्यजिज्ञपत् । **मानदेवः** परिव्रज्यां दद्ध्वं मे प्रसीदत ॥ २१ ॥
निर्बन्धात् पितरौ चानुज्ञाप्य शुद्धे दिने ततः । चारित्रमग्रहीदुग्रमाचचार व्रतं च सः ॥ २२ ॥
25 अङ्गैकादशकेऽधीती[6] छेद-मौलेषु निष्ठितः । उपाङ्गेषु च निष्णातस्ततो जज्ञे बहुश्रुतः ॥ २३ ॥
विज्ञाय सोऽन्यदा विज्ञो योग्यः सद्गुरुभिस्तदा । पदप्रतिष्ठितश्चक्रे **चान्द्रगच्छांबुधेः**[7] शशी ॥ २४ ॥
प्रभावाद् ब्रह्मणस्तस्य **मानदेव**प्रभोस्तदा । श्री**जया-विजया**देव्यौ नित्यं प्रणमतः क्रमौ ॥ २५ ॥
एवं प्रभावभूयिष्ठे शासनस्य प्रभावकः । संघव्योमाङ्गणोद्योत[8]भास्वानिव स च व्यभात् ॥ २६ ॥

§ ३. अथ **तक्षशिला**पुर्यां चैत्यपञ्चशतीभृति । धर्मक्षेत्रे तदा जज्ञे गरिष्ठमशिवं जने ॥ २७ ॥
अकालमृत्यु[9]संपातिरोगैर्लोक उपद्रुतः[10] । जज्ञे यत्रौषधं वैद्यो न प्रभुर्गुणहेतवे ॥ २८ ॥
30 प्रतिजागरणे ग्लानदेहस्येह प्रयाति यः । गृहागतः स रोगेण पात्यते तल्पके द्रुतम्[11] ॥ २९ ॥

---

1 A कोटरकं । 2 D सिद्धिक्षेत्रे । 3 A बाणारस्याः । 4 A D प्रद्योतने । 5 A धारणीति । 6 A ऽधीते । 7 A चन्द्रगच्छो बुधैः । 8 A °गणोद्योतो । 9 N °मृत्युं संयाति° । 10 A उपद्रवः । 11 A ध्रुवम् ।

स्वजनः कोऽपि कस्यापि नास्तीह समये तथा। आक्रन्दभैरवारावरौद्ररूपाऽभवत् पुरी ॥ ३० ॥
चित्यानां[1] च सहस्राणि[2] दृश्यन्तेऽत्र बहिः क्षितौ। शबानामर्द्धदग्धानां श्रेणयश्च भयंकराः ॥ ३१ ॥
सुभिक्षमभवद् गृध्रक्रव्यादानां तदोदितम्। शून्या भवितुमारेभे पुरी लङ्कोपमा तदा ॥ ३२ ॥
पूजा च विश्वदेवानां विश्रान्ता पूजकान् विना। गृहाणि शबसंघाततदुर्गन्धानि तदाभवन् ॥ ३३ ॥
कियानप्युद्धृतः संघश्चैत्ये कृत्वा समागमम्। मन्त्रयामास कल्पान्तः किमद्यैवागतो ध्रुवम् ॥ ३४ ॥ 5
न **कपर्दी** न **चाम्बा** च **ब्रह्मशान्ति**र्न यक्षराट्। अद्याभाग्येन संघस्य नो विद्यादेवता अपि ॥३५॥
भाग्यकाले यतः सर्वो देवदेवीगणः स्फुटः। सप्रत्यय इदानीं तु ययौ कुत्रापि निश्चितम् ॥ ३६ ॥
इति तेषु निराशेषु समेता शासनामरी। उपादिशत् तदा संघमेवं सन्तप्यते कथम् ॥ ३७ ॥
म्लेच्छानां व्यन्तरैरुग्रैः सर्वः सुरसुरीगणः। [3]विद्रुतस्तद्विधीयेत किमत्रास्माभिरुच्यताम् ॥ ३८ ॥
अतः परं तृतीयेऽत्र वर्षे भङ्गो भविष्यति। तुरुष्कैर्विहितः सम्यग्ज्ञात्वा कृत्यं यथोचितम् ॥ ३९ ॥ 10
परमेकमुपायं वः कथयिष्यामि वस्तुतः। शृणुतावहिताः सन्तः संघरक्षा यथा भवेत् ॥ ४० ॥
ततस्तेनाशिवे क्षीणे मुक्त्वा पुरमिदं ततः। अन्यान्यनगरेष्वेव गन्तव्यं वचसा मम ॥ ४१ ॥
श्रुत्वा च किंचिदाश्वासवन्तस्ते पुनरभ्यधुः[4]। समादिश महादेवि! कोऽन्यो[5] नः परिरक्षिता ॥ ४२ ॥
देवी प्राहाथ **नड्डूले मानदेवा**ख्यया गुरुः। श्रीमानस्ति तमानाय्य तत्पादक्षालनोदकैः ॥ ४३ ॥
आवासानभिषिञ्चध्वं यथा शाम्यति डामरम्। एवमुक्त्वा तिरोधत्त श्रीमच्छासनदेवता ॥ ४४ ॥ 15
श्रावकं **वीरदत्तं** ते प्रैषुर्न**ड्डूलपत्तने**। विज्ञप्तिकां गृहीत्वा च स तत्र क्षिप्रमागमत् ॥ ४५ ॥
भूप्र(प्रभू?)णामाश्रयं दृष्ट्वा व्यधान्नैषेधिकीं तदा। मध्याह्ने सूरिपादाश्च मध्येऽपवरकं स्थिताः ॥ ४६ ॥
उपाविशन् शुभे स्थाने स्थाने सद्ब्रह्मसंविदाम्। पर्यङ्कासनमासीना नासाग्रन्यस्तदृष्टयः ॥ ४७ ॥–युग्मम्।
समानाः[6] कृच्छ्र-कल्याणे तृणे स्त्रैणे मणौ मृदि। तेषां प्राप्ते प्रणामाय देव्यौ श्रीविजया-जये ॥ ४८ ॥
कोणान्तरुपविष्टे च ते दृष्ट्वा सरलः स च। निमग्नात्मा तमस्तोमे दध्यौ चिन्ताविपन्नधीः[7] ॥ ४९ ॥ 20
ध्रुवं प्रतारिकाऽस्माकं साऽपि शासनदेवता। ययैतावन्तमध्वानं प्रेष्याहं क्लेशितो ध्रुवम् ॥ ५० ॥
आचार्योऽयं हि राजर्षिर्मध्येदिव्याङ्गनं स्थितः। अहो चारित्रमस्यास्ति शाम्येदस्मादुपद्रवः ॥ ५१ ॥
मामायान्तं च विज्ञाय ध्यानव्याजमिदं दधौ। क एवं नहि जानीते तस्मादासे क्षणं बहिः ॥ ५२ ॥
ध्याने च पारिते मुष्टिं बद्ध्वासावृजुधार्मिकः। प्राविशद् द्वारमध्ये च सावज्ञं गुरुमानमत् ॥ ५३ ॥
विज्ञाय चेङ्गितैर्देव्यौ तस्याविप्रतिपन्नताम्। अदृष्टैर्बन्धसम्बन्धैस्तं निपात्य बबन्धतुः ॥ ५४ ॥ 25
आरटन्तं च तं तारस्वरं दृष्ट्वानुकम्पया। प्रभुर्विमोचयामास तदज्ञानप्रकाशनात्[8] ॥ ५५ ॥
जयाह रे महापाप! शापयोग्य क्रियाधम। प्रभोः श्री**मानदेव**स्य चारित्रस्य शरीरिणः ॥ ५६ ॥
एवं विकल्पमाधत्से श्रावकव्यंसको भवान्। पुंशाप! नाकिचिह्नानामनभिज्ञाज्ञशेखरः ॥ ५७ ॥–युग्मम्।
ईक्षस्वानिमिषे दृष्टी चरणावक्षितिस्पृशौ। पुष्पमाला न च म्लाना देव्यावावां[9] न लक्ष्यसे ॥ ५८ ॥
प्रागेव मुष्टिघातेन प्रैषयिष्ये यमालयम्। जैनश्रद्धालुदम्भेनाहमपि च्छलिता त्वया ॥ ५९ ॥ 30
प्रभोरादेश एव त्वज्जीवने हेतुरग्रिमः। परं पातकभूः कस्मादीदृशस्त्वं समागतः ॥ ६० ॥
मुष्टिर्बद्धो लभेतात्र लक्षमित्यभिसन्धितः*। बद्धमुष्टिर्भवानागात् तादृगेव प्रयातु तत् ॥ ६१ ॥

1 A चितानां; N चैत्यानां। 2 A सहस्राणां। 3 N विद्रुतः। 4 N °रभ्यधुः। 5 N ऽन्यः। 6 A D समानां; B समाना। 7 A दध्याविति प्रनष्टधीः; D विप्रतिपन्नधीः। 8 N B प्रकाशवान्। 9 N देव्यावावं। * 'अभिप्रायात्' इति D टि०।

स प्राह श्रूयतां देव्यौ श्रीसंघः प्रजिघाय माम् । पुर्यास्तक्षशिलाख्यायाः शासनेशोपदेशतः ॥ ६२ ॥
अशिवोपशमार्थं श्रीमानदेवस्य सुप्रभोः । आह्वानायाथ मूर्खत्वान्ममैवाशिवमाययौ ॥ ६३ ॥
उवाच विजया तत्राशिवं किमिव नो भवेत् । तत्र युष्मादृशः श्राद्धा दर्शनच्छिद्रवीक्षकाः ॥ ६४ ॥
वराक ! न विजानासि प्रभावं त्वममुष्य भोः । मेघा वर्षन्ति सस्यानां निष्पत्तिश्चास्य सत्त्वतः ॥ ६५ ॥
5 श्रीशान्तिनाथतीर्थेशसेविनी शान्तिदेवता । सा मूर्तित्रितयं कृत्वाऽस्यव्याजाद् वन्दते ह्यमुम् ॥ ६६ ॥
विजयाह त्वयैकेन श्रावकेण ससंमदा[1] । प्रहिणोमि कथं पूज्यानकर्णहृदया किमु ॥ ६७ ॥
बहवस्त्वादृशाः[2] सन्ति यत्रेदृग्धार्मिकोत्तमाः । कथं भवेत् पुनस्तेभ्यः प्रहितस्तत्र नो गुरुः ॥ ६८ ॥
सूरयः प्राहुरादेशः संघस्यात्रेय एव नः । अशिवोपशमः [3]कार्यस्तदत्रस्थैर्विधास्यते[4] ॥ ६९ ॥
वयं तु नागमिष्यामोऽत्रत्यसंघाननुज्ञया । संघमुख्ये इमे देव्यौ तयोरनुमतिर्न च ॥ ७० ॥
10 अमूभ्यामुपदिष्टो यः पुरा कमठजल्पितः । अस्ति मन्त्राधिराजाख्यः श्रीपार्श्वस्य प्रभोः क्रमः ॥ ७१ ॥
श्रीशान्तिनाथ-पार्श्वस्थप्रभुस्मृतिपवित्रितम् । गर्भितं तेन मन्त्रेण सर्वाशिवनिषेधिना ॥ ७२ ॥
श्री शा न्ति स्त व ना भि ख्यं गृहीत्वा स्तवनं वरम् ।
स्वस्थो गच्छ निजं स्थानमशिवं प्रशमिष्यति ॥ ७३ ॥–त्रिभिर्विशेषकम् ।
इत्यादेशं च संप्राप्य तथैव कृतवान् मुदा । प्राप्तस्तक्षशिलायां स स्तवं संघस्य चार्पयत् ॥ ७४ ॥
15 तस्य चाबालगोपालं पठतः स्तवनं मुदा । दिनैः कतिपयैरेव प्रशान्तोऽयमुपद्रवः ॥ ७५ ॥
कोऽपि कुत्रापि चायातः प्रणश्य[5] जनमध्यतः । गते वर्षत्रये भग्ना तुरुष्कैः सा महापुरी ॥ ७६ ॥
अद्यापि तत्र बिम्बानि पित्तलाश्ममयानि च । तद्भूगृहेषु सन्तीति ख्याता वृद्धजनश्रुतिः ॥ ७७ ॥
ततः प्रभृति संघस्य क्षुद्रोपद्रवनाशकः[6] । स्तवः प्रवर्ततेऽद्यापि 'शा न्ति शा न्त्या दि'रद्भुतः ॥ ७८ ॥
मन्त्राधिराजनामाभूत् तस्य मन्त्रः प्रसिद्धिभूः । चिन्तामणिरिवेष्टार्थप्रद आराधनावशात् ॥ ७९ ॥
20 सूरिः श्रीमानदेवाख्यः शासनस्य प्रभावनाः । विधायानेकशो योग्यं शिष्यं पट्टे निवेश्य च ॥ ८० ॥
जिनकल्पाभसँलेखनया मँल्लिख्य विग्रहम् । आयुःप्रान्ते परं ध्यानं बिभ्रत् त्रिदिवमाप सः ॥ ८१ ॥

**इत्थं श्रीमन्मानदेवप्रभूणां वृत्तं चित्तस्थैर्यकृन्मादृशानाम् ।**
**विद्याभ्यासैकाग्रहृध्यानमन्यव्यासङ्गानां यच्छतादुच्छिदं च ॥ ८२ ॥**
**श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-**
25 **चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।**
**श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः**
**शृङ्गोऽसावगमत् त्रयोदश इह श्रीमानदेवाश्रयः ॥ ८३ ॥**
**सर्वज्ञचिन्तनवशादिव तन्मयत्वमासादयन् जयति जैनमुनिः स एषः ।**
**प्रद्युम्नसूरिरपि भूरिमतिः कवीनामर्थेषु काव्यविषयेषु विचक्षणो यः ॥ ८४ ॥**
30 ॥ ग्रं० ८८, अ० १६ । उभयं ३२०२ ॥

**॥ इति श्रीमानदेवसूरिप्रबन्धः* ॥**

---

1 B N समं मुदा । 2 A °तादृशाः । 3 B D कार्यं । 4 N विधाप्यते । 5 N प्रगम्य । 6 A °नाशनः । * B आदर्श एवोपलभ्यते पंक्तिरियम् ।

# १४. महाकविश्रीसिद्धर्षिचरितम् ।

§१. श्री**सिद्धर्षिः** श्रियो देयाद् धियामध्यामधामभूः । निर्ग्रन्थग्रन्थतामापुर्यद्ग्रन्थाः सांप्रतं भुवि ॥ १ ॥
श्री**सिद्धर्षि**प्रभोः पान्तु वाचः परिपचेलिमाः । अनाद्यविद्यासंस्कारा यदुपास्तेर्भिदेलिमाः ॥ २ ॥
**सुप्रभः** पूर्वजो यस्य सुप्रभः[1] प्रतिभावताम् । बन्धुर्बन्धुरभाग्यश्रीर्यस्य[2] **माघः** कवीश्वरः ॥ ३ ॥
चरितं कीर्त्तयिष्यामि तस्य प्रस्यज्जडाशयम् । भूभृच्चकचमत्कारि वारिताखिलकल्मषम् ॥ ४ ॥ 5
अजर्जरश्रियां धाम वेपालक्ष्यजरज्जरः । अस्ति **गूर्जरदेशो**ऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र **श्रीमाल**मित्यस्ति पुरं मुखमिव क्षितेः । चैत्योपरिस्थकुम्भालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यन्ते मत्तवारणराजिताः । राजमार्गाश्च शोभन्ते मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च सन्त्यत्र नवं धूपगमं श्रिताः । महर्षयश्च निःसङ्गा न बन्धूपगमं श्रिताः ॥ ८ ॥
तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः । नृपः श्री**वर्मलाता**ख्यः शत्रुमर्मभिदाक्षमः ॥ ९ ॥ 10
तस्य **सुप्रभदेवो**ऽस्ति मन्त्री मित्रं जगत्यपि । सर्वव्यापारमुद्राभृन्मुद्राकृद्दुर्जनानने ॥ १० ॥
देवार्योशनसौ यस्य नीतिरीतिमुदीक्ष्य[3] तौ । अवलम्ब्य स्थितौ विष्णुपदं कर्तुं तपः किल ॥ ११ ॥
तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ । आद्यो **दत्तः** स्फुरद्वृत्तो द्वितीयश्च **शुभंकरः** ॥ १२ ॥
दत्तवित्तोऽनुजीविभ्यो **दत्त**श्चित्तस्थ[4]धर्मधीः । अप्रवृत्तः कुकृत्येषु तत्र सुत्रामवच्छ्रिया ॥ १३ ॥
हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिता । जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा ॥ १४ ॥ 15
तस्य श्री**भोज**भूपालबालमित्रं कृतीश्वरः । श्री**माघो** नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः ॥ १५ ॥
ऐदंयुगीनलोकस्य सारसारस्वतायितम् । शि शु पा ल व धः काव्यं प्रशस्तिर्यस्य शाश्वती ॥ १६ ॥
श्री**माघो**ऽस्ताघधीः श्लाघ्यः प्रशस्यः कस्य नाभवत् । चित्रं जाड्यहरा यस्य काव्यगङ्गोर्मिविप्रुषः ॥ १७ ॥
तथा **शुभंकर**श्रेष्ठी विश्वविश्वप्रियंकरः । यस्य दानाद्भुतैर्गीतैर्हेयैश्चो हर्षभूरभूत् ॥ १८ ॥
तस्याभूद् गेहिनी **लक्ष्मी**र्लक्ष्मीर्लक्ष्मीपतेरिव । यया सत्यापिताः सत्यः सीताद्या विश्वविश्रुताः ॥ १९ ॥ 20
नन्दनो नन्दनोत्तंसः कल्पद्रुम इवापरः । यथेच्छादानतोऽर्थिभ्यः प्रथितः **सिद्ध**नामतः ॥ २० ॥
अनुरूपकुलां कन्यां धन्यां पित्रा विवाहितः । भुंक्ते वैषयिकं सौख्यं दोगुन्दुग इवामरः ॥ २१ ॥

§२. दुरोदरभरोदारो दाराचारपराङ्मुखः । अन्यदा सोऽभवत् कर्म दुर्जयं विदुषामपि ॥ २२ ॥
पितृमातृगुरुस्निग्धबन्धुमित्रैर्निवारितः । अपि नैव न्यवर्तिष्ट दुर्वारं व्यसनं यतः ॥ २३ ॥
अगूढातिप्ररूढेऽस्मिन्नहर्निशमसौ वशः । तदेकचित्तधूर्तानां सदाचारादभूद् बहिः ॥ २४ ॥ 25
स पिपासाशनायाति शीतोष्णाद्य[5]विमर्शतः । योगीव लीनचित्तोऽत्र [6]वित्रस्यत्साधुवाक्यतः ॥ २५ ॥
निशीथातिक्रमे रात्रावपि स्वकगृहागमी । वध्वा प्रतीक्ष्य एकस्यास्तया नित्यं प्रतीक्ष्यते ॥ २६ ॥
अन्यदा रात्रिजागर्यानिर्यातवपुरुद्यमाम् । गृहव्यापारकृत्येषु विलीनाङ्गस्थितिं ततः ॥ २७ ॥
ईदृग् ज्ञातेयसम्बन्धवशकर्कशवाग्भरम् । श्वश्रूरश्रूणि मुञ्चन्तीं वधूं प्राह सगद्गदम् ॥ २८ ॥–युग्मम् ।
मयि सत्यां पराभूतिं कस्ते कुर्यात् ततः स्वयम् । खिद्यसे[7] कुविकल्पैस्त्वं गृहकर्मसु[8] चालसा ॥ २९ ॥ 30
श्वशुरोऽपि च ते व्यग्रो यदा राजकुलादिह । आगन्ता च ततो देवावसरादावसज्जिते ॥ ३० ॥
मामेवाक्रोक्ष्यति त्वं तत् तथ्यं मम निवेदय । यथा द्राग् भवदीयार्त्तिप्रतीकारं करोम्यहम् ॥३१॥–युग्मम् ।

1 A सुरप्रभः । 2 'बन्धुरभाग्यस्य श्रीर्यस्य' इत्येतादृशः पाठः सर्वेष्वादर्शेषु समुपलभ्यते । 3 A °रीतिमुदीक्षितौ । 4 A D दत्तश्चित्तश्च धर्म°; N दत्तवित्तसुधर्म° । 5 N शीतोष्माद्य । 6 N व्यत्रसत् । 7 B D खिद्यते; N विद्यते । 8 N कर्मभरालसा ।

सा न किंचिदिति प्रोच्य श्वश्रूनिर्बन्धतोऽवदत्। युष्मत्पुत्रोऽर्द्धरात्रातिक्रमेऽभ्येति करोमि किम्॥ ३२॥
श्रुत्वेत्याह तदा श्वश्रूः किं नाभेऽजल्पि मे पुरः। सुतं त्वं बोधयिष्यामि वचनैः कर्कशप्रियैः॥ ३३॥
अद्य स्वपिहि वत्से! त्वं निश्चिन्ताऽहं तु जागरम्। कुर्वे सर्वं भलिष्यामि नात्र कार्योऽधृतिस्त्वया॥ ३४॥
ओमित्यथ स्नुषाप्रोक्ते रात्रौ तद्धाम्नि[1] तस्थुषी। विनिद्रा पश्चिमे यामे रात्रेः पुत्रः समागमत्॥ ३५॥
5 द्वारं द्वारमिति प्रौढस्वरोऽसौ यावदूचिवान्। इयद्रात्रौ क आगन्ता माताऽवादीदिति स्फुटम्॥ ३६॥
**सिद्धः सिद्ध** इति प्रोक्ते तेन सा कृतकक्रुधा। प्राह सिद्धं न जानेऽहमप्रस्तावविहारिणम्॥ ३७॥
अधुनाऽहं क्व यामीति सिद्धेनोक्ते जनन्यपि। अन्यदा शीघ्रमायाति यथाऽस्मात् कर्कशं जगौ॥ ३८॥
एतावत्यां निशि द्वारं विवृतं यत्र पश्यसि। तत्र यायाः समुद्घाटद्वारा सर्वापि किं निशा॥ ३९॥
भवत्वेवमिति प्रोक्ते सिद्धस्तस्माभिरीय च। पश्यन्ननावृतद्वारो द्वारेऽगादनगारिणाम्॥ ४०॥
10 सदाऽप्यनावृतद्वारशालायां पश्यति स्म सः। मुनीन् विविधचर्यासु स्थितान्निष्पुण्यदुर्लभान्॥ ४१॥
कांश्चिद्वैरात्रिकं कालं विनिद्रस्य गुरोः पुरः। प्रवेदयन्त उत्साहात् कांश्चित्स्वाध्यायरङ्गिणः॥ ४२॥
उत्कटिकासनान् कांश्चित् कांश्चिद्गोदोहिकासनान्। वीरासनस्थितान् कांश्चित् सोऽपश्यन् मुनिपुङ्गवान्॥४३॥
अचिन्तयच्छमसुधानिर्झरे निर्जरा इव। सुस्नातशीतला एते तृष्णामीता मुमुक्षवः॥ ४४॥
मादृशा व्यसनासक्ता अभक्ताः स्वगुरुष्वपि। मनोरथद्रुहस्तेषां विपरीतविहारिणः॥ ४५॥
15 धिग्! जन्मेदमिहामुत्र दुर्यशो दुर्गतिप्रदम्। तस्मात् सुकृतिनी वेला यत्रैते दृष्टिगोचराः॥ ४६॥
अमीषां दर्शनात् कोपिन्यापि [2]सूपकृतं मयि। जनन्या क्षीरमुत्तप्तमपि पित्तं प्रणाशयेत्॥ ४७॥
ध्यायन्नित्यमतस्तस्थौ नमस्तेभ्यश्चकार सः। प्रदत्तधर्मलाभाशीर्निर्ग्रन्थः प्रभुराह च॥ ४८॥
को भवानिति तैः प्रोक्ते प्रकटं प्राह साहसी। **शुभंकरा**त्मजः **सिद्धो** द्यूतान्मात्रा निषेधितः॥ ४९॥
उद्घाटद्वारि यायास्त्वमोकसीयन्महानिशि। इत्यम्बावचनादत्रा[3]प्रावृतद्वारि सङ्गतः॥ ५०॥
20 अतःप्रभृति पूज्यानां चरणौ शरणं मम। प्राप्ते प्रवहणे को हि निस्तितीर्षति नाम्बुधिम्॥ ५१॥
उपयोगं श्रुते दत्त्वा योग्यताहृष्टमानसाः। प्रभावकं भविष्यन्तं परिज्ञायाथ तेऽवदन्॥ ५२॥
अस्मद्वेषं विना नैवास्मत्पार्श्वे स्थीयतेतराम्। सदा स्वेच्छाविहाराणां दुर्ग्रहः स भवादृशाम्॥ ५३॥
धार्यं ब्रह्मव्रतं घोरं दुश्चरं[4] कातरैर्नरैः। कापोतिका तथा वृत्तिः समुदानाऽपराभिधा॥ ५४॥
दारुणः केशलोचोऽथ सर्वाङ्गीणव्यथाकरः। सिकतापिण्डवच्चायं निरास्वादश्च संयमः॥ ५५॥
25 उच्चावचानि वाक्यानि नीचानां ग्रामकण्टकाः। सोढव्या दशनैश्चर्वणीया लोहमया यवाः॥ ५६॥
उग्रं षष्ठाष्टमाद्यं तत्तपः कार्यं सुदुष्करम्। स्वाद्यास्वाद्येषु लब्धेषु रागद्वेषौ न पारणे॥ ५७॥
इत्याकर्ण्यावदत् **सिद्धो** मत्सदृग्व्यसनस्थिताः। छिन्नकर्णोष्ठनासादिबाहुपादयुगा नराः॥ ५८॥
क्षुधाकरालिता भिक्षाचौर्यादेर्वृत्तिधारिणः। अप्राप्तशयनस्थानाः पराभूता निजैरपि॥ ५९॥
नाथ! किं तदवस्थाया अपि किं दुष्करो भवेत्। संयमो विश्ववन्द्यस्तन्मूर्ध्नि देहि करं मम॥ ६०॥
30 यददत्तं न गृह्णीमो वयं तस्मात् स्थिरो भव। दिनमेकं यथाऽनुज्ञापयामः[5] पैतृकं तव॥ ६१॥
ततः प्रमाणमादेश इत्युक्त्वा तत्र सुस्थिते। परं हर्षं दधौ सूरिः सुविनेयस्य लाभतः॥ ६२॥

§ ३. इतः **शुभंकरः** श्रेष्ठी प्रातः पुत्रं समाह्वयत्। शब्दादाने च सम्भ्रान्तोऽपश्यत्[6] पत्नीं नताननाम्॥६३॥
अद्यरात्रौ[7] कथं नागात् **सिद्ध** इत्युदिता सती। लज्जानम्राऽवदद् द्यूतीशिक्षितोऽथ सुतो ययौ॥ ६४॥

---

1 N तद्द्वारि। 2 N कोपिन्याप्युपकृतं। 3 B N इयंति वाचनादत्रा°; D इयंत्स्ववाचनादत्रा°। 4 N दुष्करं। 5 N विज्ञापयामः। 6 N संभ्रांतः पश्यन्। 7 N अद्यरात्रे।

श्रेष्ठी दध्यौ महेलाः स्युरुत्तानधिषणा ध्रुवम् । न कर्कशवचोयोग्यो[1] व्यसनी शिक्ष्यते शनैः ॥ ६५ ॥
ईषत्करं ततः प्राह प्रिये ! भव्यं त्वया कृतम् । वयं किं प्रवदामोऽत्र वणिजां नोचितं ह्यदः ॥ ६६ ॥
गृहाद् बहिश्च निर्याय प्रयासाङ्गीकृतस्थितिः । व्यलोकयत् पुरं सर्वमहो मोहः पितुः सुते ॥ ६७ ॥
[2]दृष्टश्चारित्रि[3]शालायामसावुपशमोर्मिभिः । आप्लुतोऽपूर्वसंस्थानः ततोऽवादि च तेन सः ॥ ६८ ॥
यद्येवं शमिसामीप्यस्थितिं पश्यामि ते सुत ! । अमृतेनेव सिच्ये तन्नन्दनानन्दनस्थिते ! ॥ ६९ ॥
द्यूतव्यसनिनां साध्वाचारातीतकुवेषिणाम् । सङ्गतो मम हृद्दुःखहेतुः केतुरिव ग्रहः ॥ ७० ॥
आगच्छ वत्स ! सोत्कण्ठा तव माता प्रतीक्षते । किंचिन्मद्वचनैर्दूना सन्तप्ता निर्गमात् [4]तव ॥ ७१ ॥
स प्राह तात ! पर्याप्तं [5]गेहागमनकर्मणि । मम लीनं गुरोः पादारविन्दे हृदयं ध्रुवम् ॥ ७२ ॥
जैनदीक्षाधरो मार्गे मार्गे निष्प्रतिकर्मतः । आचरिष्यामि तन्मोहो भवद्भिर्मा विधीयताम् ॥ ७३ ॥
याया अपावृतद्वारे वेश्मनीत्यम्बिकावचः । शमिसंनिध्यवस्थानं मतं नस्तद्[6] भवद्वचः ॥ ७४ ॥
यावज्जीवं हि विदधे यद्यहं तत् कुलीनता । अक्षता स्यादिदं चित्ते सम्यक् तात ! विचिन्तय ॥ ७५ ॥
अथाह[7] सम्भ्रमाच्छ्रेष्ठी किमिदं वत्स[8] ! चिन्तितम् । असंख्यध्वजविक्षेयं धनं कः सार्थयिष्यति ॥ ७६ ॥
विलस त्वं यथासौख्यं [9]प्रदेहि निजयेच्छया । अविमुञ्चन् सदाचारं सतां श्लाघ्यो भविष्यसि ॥ ७७ ॥
एकपुत्रा तवाम्बा च निरपत्या वधूस्तथा । गतिस्तयोस्त्वमेवासि[10] जीर्णे माऽजीगणस्तु माम् ॥ ७८ ॥
पित्रेत्थमुदिते प्राह **सिद्धः** सिद्धशमस्थितिः । संपूर्णं लोभिवाणीभिस्तत्र मे श्रुतिरश्रुतिः ॥ ७९ ॥
ब्रह्मण्येव[11] मनो लीनं ममातो गुरुपादयोः । निपत्य ब्रूहि दीक्षां मे पुत्रस्य मम [12]यच्छत (?) ॥ ८० ॥
[13]अतिनिर्बन्धतस्तस्य तथा चक्रे **शुभंकरः** । गुरुः प्रादात् परिव्रज्यां तस्य पुण्ये [14]स्वरोदये ॥ ८१ ॥
दिनैः कतिपयैर्मासमाने तपसि निर्मिते । शुभे लग्ने पञ्चमहाव्रतारोपणपर्वणि ॥ ८२ ॥
दिग्बन्धं श्रावयामास पूर्वतो गच्छसन्ततिम् । सत्प्रभुः शृणु वत्स ! त्वं श्रीमान् **वज्रप्रभुः** पुरा ॥ ८३ ॥
तच्छिष्यवज्रसेनस्याभूद् विनेयचतुष्टयी । **नागेन्द्रो निर्वृतिश्चन्द्रः** ख्यातो **विद्याधरस्तथा** ॥ ८४ ॥
आसीन्निर्वृतिगच्छे च **सूराचार्यो** धियां निधिः । तद्विनेयश्च **गर्गर्षि**रहं दीक्षागुरुस्तव ॥ ८५ ॥
शीलाङ्गानां सहस्राणि त्वयाऽष्टादश निर्भरम् । वोढव्यानि विविश्राममाभिजात्यफलं ह्यदः ॥ ८६ ॥
ओमिति प्रतिपद्याथ तप उग्रं चरन्नसौ । अध्येता वर्त्तमानानां सिद्धान्तानामजायत ॥ ८७ ॥

§४. स चो प दे श मा ला या वृत्तिं [15]बालावबोधिनीम् । विदधेऽवहितप्रज्ञः सर्वज्ञ इव गीर्भरैः ॥ ८८ ॥
सूरिर्दाक्षिण्यचन्द्राख्यो गुरुभ्राताऽस्ति तस्य सः । कथां **कुवलयमालां** चक्रे शृङ्गारनिर्भराम् ॥८९॥
किञ्चित् **सिद्धकृत**ग्रन्थसोत्प्रासः सोऽवदत् तदा । लिखितैः किं नवो ग्रन्थस्तदवस्थागमाक्षरैः ॥ ९० ॥
शास्त्रं **श्रीसमरादित्यचरितं** कीर्त्यते भुवि । यद्रसोर्मिप्लुता जीवाः क्षुत्तृडाद्यं न जानते ॥ ९१ ॥
अर्थोत्पत्तिरसाधिक्यसारा किञ्चित् कथापि मे । अहो ते लेखकस्येव ग्रन्थः पुस्तकपूरणः ॥ ९२ ॥
अथ **सिद्धकविः** प्राह मनोदूनोऽपि नो खरम् । वयोतिक्रान्तपाठानामीदृशी कविता भवेत् ॥ ९३ ॥
का स्पर्द्धा **समरादित्य**कवित्वे पूर्वसूरिणा । खद्योतस्येव सूर्येण मादृग्मन्दमतेरिह ॥ ९४ ॥
इत्थमुत्तेजित[16]स्वान्तस्तेनासौ निर्ममे बुधः । [17]अक्षदुर्बोधसम्बन्धां[18] प्रस्तावाष्टकसम्भृताम् ॥ ९५ ॥

---

1 °वचोयोग्ये । 2 N इतश्च° । 3 N °चरित्र° । 4 A निर्गमात् । 5 A गेहे गमन° । 6 N °तदभूद्वचः । 7 B अन्वाह । 8 N वस्तु । 9 N विदेही । 10 N त्वमेवासी° । 11 N ब्रह्मणीव । 12 B यच्छ तत् । 13 N B इति । 14 B C पुण्ये-श्वरो° । 15 B C वृद्धबालाव° । 16 N °मुद्वेजित° । 17 B अग्नि°; N अन्य° । 18 N संबद्धां ।

रम्यामुपमितिभवप्रपञ्चाख्यां महाकथाम् । सुबोधकवितां[1] विद्वदुत्तमाङ्गविधूननीम् ॥ ९६ ॥—युग्मम् ।
ग्रन्थं व्याख्यानयोग्यं यदेनं चक्रे शमाश्रयम् । अतः प्रभृति सङ्घोऽस्य व्याख्यातृबिरुदं ददौ ॥ ९७ ॥
दर्शिता [2]चास्य तेनाथ हसितुः स ततोऽवदत् । ईदृक् कवित्वमावेयं त्वद्गुणाय मयोदितम् ॥ ९८ ॥
§ ५. ततो व्यचिन्तयत् **सिद्धो** ज्ञायते यदपीह न । तेनाप्यज्ञानता तस्मादध्येतव्यं ध्रुवं मया ॥ ९९ ॥
5 तर्कग्रन्था मयाधीताः स्वपरेऽपीह ये स्थिताः । बौद्धप्रमाणशास्त्राणि न स्युस्तद्देशमन्तरा ॥ १०० ॥
आपप्रच्छे गुरुं सम्यग् विनीतवचनैस्ततः । प्रान्तरस्थितदेशेषु गमनायोन्मनायितः ॥ १०१ ॥
निमित्तमवलोक्याथ श्रौतेन विधिना ततः । सवात्सल्यमुवाचाथ नाथप्राथमकल्पिकम् ॥ १०२ ॥
असन्तोषः शुभोऽध्याये वत्स ! किञ्चिद् वदामि तु[3] । स त्वमत्र न सत्त्वानां समये प्रमये धियाम् ॥१०३॥
भ्रान्तचित्तः[4] कदापि स्याद् हेत्वाभासैस्तदीयकैः । अर्थी तदागमश्रेणेः स्वसिद्धान्तपराङ्मुखः ॥ १०४ ॥
10 उपार्जितस्य पुण्यस्य नाशं त्वं प्राप्स्यसि ध्रुवम् । निमित्तत इदं मन्ये तस्मान्माऽत्रोद्यमी भव ॥ १०५ ॥
अथ चेदवलेपस्ते गमने न निवर्त्तते । तथापि मम पार्श्वं त्वमागा वाचा ममैकदा ॥ १०६ ॥
रजोहरणमस्माकं व्रताङ्गं नः समर्प्पयेः । इत्युक्त्वा मौनमातिष्ठद् [5]गुरुश्चित्तव्यथाधरः ॥ १०७ ॥
प्राह **सिद्धः** श्रुती च्छादयित्वा शान्तं हि कल्मषम् । अमङ्गलं प्रतिहतमकृतज्ञः क ईदृशः ॥ १०८ ॥
चक्षुरुद्घाटितं येन मम ज्ञानमयं मुदा । पुनस्तद् ध्यामयेत् को हि धूमायितपरोक्तिभिः ॥ १०९ ॥
15 अन्त्यं वचः कथं नाथ ! मयि पूज्यैरुदाहृतम् । कः कुलीनो निजगुरुक्रमयुग्मं परित्यजेत् ॥ ११० ॥
मनः कदापि गुप्येत चेद् धत्तूरभ्रमादिव । तथापि प्रभुपादानामादेशं विदधे[6] ध्रुवम् ॥ १११ ॥
*दुरध्येयानि बौद्धानां शास्त्राणीति श्रुतिश्रुतिः । स्वप्रज्ञायाः प्रमाणं तल्लप्स्ये तद्गुपिलाध्वनि ॥ ११२ ॥
इत्युदित्वा प्रणम्याथ स जगाम यथेप्सितम् । **महाबोधा**भिधं बौद्धपुरमव्यक्तवेषभृत् ॥ ११३ ॥
कुशाग्रीयमतेस्तस्याक्लेशेनापि प्रबोधतः । विद्वद्दुर्भेदशास्त्राणि तेषामासीच्चमत्कृतिः ॥ ११४ ॥
20 तस्याङ्गीकरणे मन्त्रस्तेषामासीद्दुरासदः । तमस्युद्योतको रत्नमाप्य माध्यस्थ्यमाश्रयेत् ॥ ११५ ॥
तादृग्वचःप्रपञ्चैस्तैर्वर्द्धकैर्गर्द्धकैरपि । तं विप्रलम्भयामासुर्मीनवद्धीवरा रसात् ॥ ११६ ॥
शनैर्भ्रान्तमनोवृत्तिर्बभूवासौ यथातथा । तदीयदीक्षामादत्त[7] जैनमार्गातिनिस्पृशः[8] ॥ ११७ ॥
अन्यदा तैर्गुरुत्वेऽसौ स्थाप्यमानोऽवदन्ननु । एकवेलं मया पूर्वं संवीक्ष्या गुरवो ध्रुवम् ॥ ११८ ॥
इति प्रतिश्रुतं यस्मात् तदग्रे तत्प्रतिश्रवम् । सत्यसन्धस्त्यजेत् तत्[9] कस्तत्र प्रहिणुताथ माम् ॥ ११९ ॥
25 इति सत्यप्रतिज्ञत्वमतिचारु च सौगते । मन्यमानास्ततः प्रैषुः स चागाद् गुरुसंनिधौ ॥ १२० ॥
गत्वाथोपाश्रये सिंहासनस्थं वीक्ष्य तं प्रभुम् । ऊर्ध्वस्थानशुभा यूयमित्युक्त्वा मौनमास्थितः ॥ १२१ ॥
**गर्गस्वामी** व्यमृक्षच्च सञ्जज्ञे तदिदं फलम् । अनिमित्तस्य जैनी वाग् नान्यथा भवति ध्रुवम् ॥ १२२ ॥
अस्माकं प्रह्वैपम्यमिदं जज्ञे यदीदृशः । सुविनेयो महाविद्वान् परशास्त्रैः[10] प्रलम्भितः ॥ १२३ ॥
तदुपायेन केनापि बोध्योऽसौ यदि भोत्स्यते । तदस्माकं प्रियं भाग्यैरुदितं किं बहूक्तिभिः ॥ १२४ ॥
30 ध्यात्वेत्युत्थाय गुरुभिस्तं निवेश्यासनेऽर्पिता । चैत्यवन्दनसूत्रस्य वृत्तिर्ललितविस्तरा ॥ १२५ ॥
ऊचुश्च यावदायामः कृत्वा चैत्यनतिं [11]वयम् । ग्रन्थस्तावदयं वीक्ष्य इत्युक्त्वा तेऽगमन् बहिः ॥ १२६ ॥

---

1 N °कवितां । 2 N °थास्य । 3 B नु । 4 N भ्रांतं चेतः । 5 N °गुरु° । 6 A C °भिदधे । * नोपलभ्यते श्लोकोऽयं N पुस्तके । 7 C °माधत्त । 8 B N निस्पृहः । 9 C त्यजेत्कस्तत्र । 10 N परशास्त्र° । 11 N नयम् ।

ततः सिद्धश्च तं ग्रन्थं वीक्षमाणो महामतिः। व्यमृशत् किमकार्यं तन्मयाऽऽरब्धमचिन्तितम्॥ १२७॥
कोऽन्य एवंविधो मादृगविचारितकारकः। स्वार्थभ्रंशी[1] पराख्यानैर्मणिं काचेन हारयेत्॥ १२८॥
महोपकारी[2] स श्रीमान् हरिभद्रप्रभुर्यतः। मदर्थमेव येनासौ ग्रन्थोऽपि निरमाप्यत॥ १२९॥

"आचार्यो हरिभद्रो मे धर्मबोधकरो गुरुः।
प्रस्तावे भावतो हन्त स एवाद्ये[3] निवेशितः॥ १३०॥ 5

अनागतं परिज्ञाय चैत्यवन्दनसंश्रया।
मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा॥ १३१॥

विषं विनिर्धूय कुवासनामयं व्यचीचरद् यः कृपया मदाशये।
अचिन्त्यवीर्येण सुवासनासुधां नमोस्तु तस्मै हरिभद्रसूरये॥ १३२॥"

किं कर्त्ता च मया शिष्याभासेनाथ गुरुर्मम। विज्ञायैतन्निमित्तेनोपकर्तुं त्वाह्वयन्निपात्॥ १३३॥ 10
तदंह्रिरजसा मौलिं पावयिष्येऽधुनानिशम्। आगः स्वं कथयिष्यामि गुरुः स्यान्न ह्यनीदृशः॥ १३४॥
[4]ताथागतमतभ्रान्तिर्गता मे ग्रन्थतोऽमुतः। कोद्रवस्य यथा शल्काघाततो मदनभ्रमः॥ १३५॥
एवं चिन्तयतस्तस्य गुरुर्बाह्यभुवस्ततः। आगतस्तद् दृशं पश्यन् पुस्तकस्थां मुदं दधौ॥ १३६॥
नैषेधिकीमहाशब्दं श्रुत्वोर्द्धः सम्भ्रमादभूत्। प्रणम्य रूक्षयामास शिरसा तत्पदद्वयम्॥ १३७॥
उवाच किंनिमित्तोऽयं मोहस्तव मयि प्रभो!। कारयिष्यन्ति चैत्यानि पश्चात् किं मादृशोऽधमाः॥१३८॥ 15
उन्मीलादूपकाः[5] स्फोटस्फुटा वदनविद्रुहः। स्वादविघ्नाश्चला दन्ताः कुशिष्याश्च गताः शुभाः॥ १३९॥
आहूतो मिलनव्याजाद् बोधायैव ध्रुवं प्रभो!। हरिभद्रस्तथा[6] ग्रन्थो भवता विदधे करे॥ १४०॥
भग्नभ्रमः कुशाग्रेषु प्रभुं विज्ञपये ततः। स्वस्यान्तेवासिपाशस्य पृष्ठे हस्तं प्रदेहि मे॥ १४१॥
देवगुर्वाद्यवज्ञोत्थमहापापस्य मे तथा। प्रायश्चित्तं प्रयच्छाद्य दुर्गतिच्छित् कृपां कुरु॥ १४२॥
अथोवाच प्रभुस्तत्र करुणाशरणाशयः। आनन्दाश्रुपरिस्रुत्या परिक्लिन्नोत्तरीयकः॥ १४३॥ 20
मा खेदं वत्स! कार्षीस्त्वं को वनीवच्यते न वा। पानशौण्डैरिवाभ्यस्तकुतर्कमदविह्वलैः॥ १४४॥
नाहं त्वां धूर्तितं मन्ये यद्वचो विस्मृतं न मे। मदेन विकलः कोऽपि त्वां विना प्राक्श्रुतं स्मरेत्॥ १४५॥
वेषादिधारणं तेषां विश्वासायापि सम्भवेत्। अतिभ्रान्तिं च नात्राहं मानये तव मानसे॥ १४६॥
प्रख्यातवक्तृकः[7] प्रज्ञाज्ञातशास्त्रार्थमर्मकः। कः शिष्यस्त्वादृशो गच्छेऽतुच्छे मच्चित्तविश्रमः[8]॥ १४७॥
इत्युक्तिभिस्तमानन्द्य प्रायश्चित्तं तदा गुरुः। प्रददेऽस्मै निजे पट्टे तथा प्रातिष्ठिपच्च तम्॥ १४८॥ 25
स्वयं तु भूत्वा निस्सङ्गस्त्वङ्गद्रङ्गभुवं तदा। हित्वा प्राच्यर्षिचीर्णाय तपसेऽरण्यमाश्रयत्॥ १४९॥
कायोत्सर्गी कदाप्यस्थादुपसर्गसहिष्णुधीः। कदापि निर्निमेषाक्षः प्रतिमाभ्यासमाददे॥ १५०॥
कदाचित्पारणे प्रान्ताहारधारितसंवरः[9]। कदाचिन्मासिकाद्यैश्च तपोभिः कर्म सोऽक्षपत्॥ १५१॥
एवंप्रकारमास्थाय चारित्रं दुश्चरं तदा। आयुरन्ते विधायाथानशनं स्वर्ययौ सुधीः॥ १५२॥
इतश्च सिद्धव्याख्याता विख्यातः सर्वतोमुखे। पाण्डित्ये पण्डितंमन्यपरशासनजित्वरः॥ १५३॥ 30
समस्तशासनोद्योतं कुर्वन् सूर्य इव स्फुटम्। विशेषतोऽवदातैस्तु कृतनिर्वृतिनिर्वृतिः॥ १५४॥
असंख्यतीर्थयात्रादिमहोत्साहैः प्रभावनाः। कारयन् धार्मिकैः सिद्धो वचःसिद्धिं परां दधौ॥ १५५॥

---

1 N °भ्रंशः। 2 N मदोपकारी। 3 A C एवाद्यनि°। 4 N तथागतमति°। 5 A दूषला°। 6 C °स्तदा। 7 N प्रख्यातवक्तृकप्रज्ञा। 8 N विभ्रमः। 9 N °शंबरम्।

श्रीमत्सुप्रभदेवनिर्मलकुलालंकारचूडामणिः,
श्रीमन्माघकवीश्वरस्य सहजः प्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वङ्गं कथंचित्कलि-
प्रागल्भ्यादपि सङ्गतं त्यजत भो लोकद्वये शुद्धये[1] ॥ १५६ ॥
5 श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सिद्धर्षिवृत्ताख्यया
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो जगत्संख्यया ॥ १५७ ॥

॥ ग्रं० १६० । उभयं ३३८० ॥

10 ॥ इति श्रीसिद्धर्षिप्रबन्धः ॥

---

1 N सिद्धये ।

# १५. श्रीवीरसूरिचरितम्।

§ १. आन्तरारिहरिध्वंसी[1] दुष्कर्मगजयूथहृत्। अष्टापदोदयद्वर्णः [2]श्रीवीरः स्वान्वयः श्रिये॥ १॥
श्रीमद्वीरगणिस्वामिपादाः पान्तु यदादरात्। कषायादिरिपुव्रातो भवेन्नागमनक्षमः॥ २॥
विबुधा विबुधा यस्योपदेशैरमृताश्रवैः। स्वान्ययोरुपकाराय तस्य वृत्तं प्रतन्यते॥ ३॥
पुरं श्रीमालमित्यस्ति गभस्तिरपहस्तितः। यदुद्यानद्रुमैः पूर्वपश्चिमावाश्रयद् गिरी॥ ४॥ 5
मन्दतामरसत्वं च यत्र बिभ्रति नो जनाः। मन्दतामरसत्वं च दधते न सरांस्यपि॥ ५॥
श्रीधूमराजवंशीयः कुमुदामोदिमण्डलः। राजात्र देवराजोऽस्ति तरङ्गितनयोदधिः॥ ६॥
वणिक् प्राग्वहरस्तत्र शिवनागाभिधः सुधीः। यन्मन्त्रैर्ह्रियतेऽत्युग्रद्विजिह्वप्रभवं विषम्॥ ७॥
दृढानुरागी श्रीजैनधर्मे श्रीधरणाभिधम्। आरराध स नागेन्द्रं तद्भक्तेरतुषच्च सः॥ ८॥
कलिकुण्डकमं तस्य सर्वसिद्धिकरं ददौ। विषापहारकं सद्यो जपहोमादिकैर्विना॥ ९॥ 10
यः फूत्कारकरस्पर्शैरष्टानामपि संहरेत्। विषं नागकुलानां स मन्त्रो निष्पुण्यदुर्लभः॥ १०॥
स्तवनं स तदा चक्रे तत्सन्दर्भप्रताप[3]परिपूतम्। स्मरणादपि दुरितहरं ख्यातं धरणोरगेन्द्राख्यम्॥ ११॥
तस्य पूर्णलताऽन्वर्था कान्ता धर्मद्रुमाश्रिता। कुलकन्दा वचःपत्रा यशःपुष्पा महःफला॥ १२॥
स्वस्ति वीरस्तयोः पुत्रो रत्नदीप इव स्फुरन्। अक्षयार्चिस्तमोहन्ता दिवसप्रकटप्रभः॥ १३॥
यस्य कोटिध्वजव्याजाद् वैजयन्त्य इवोर्जिताः। सुमनस्त्वेन गीर्वाणान् जित्वा वीरः कथं न सः॥ १४॥ 15
स सप्तोद्वाहितः कन्याः सप्तानां व्यवहारिणाम्। सप्ताब्धीनामिवामूल्यरत्नौघैर्मण्डिताः श्रियः॥ १५॥
श्रीवीरं वन्दितुं वीरः श्रीमत्सत्यपुरे सदा। मृते पितरि वैराग्याद् याति पर्वसु सर्वदा॥ १६॥
अन्यदा तस्करैर्गच्छन् विद्रोतुमयशस्करैः। अवेक्ष्यतारथान्[4] शुष्कपत्रैः कारस्करैरिव॥ १७॥
प्रणश्य च तदा श्यालः श्रेष्ठिनो गृहमागमत्। अधृतेश्चागमन्माता गृहद्वारे जनश्रुतेः॥ १८॥
वीरः कुत्र तया पृष्टे नर्मणा सोऽप्यभाषत। चौरैर्वीरो मृषावीरः प्रहतः सत्त्ववर्जितः॥ १९॥ 20
इत्याकर्ण्य तदम्बा च [5]तथैवास्थादजीविता। अहो अतुच्छं वात्सल्यं मातुर्वाक्यपथातिगम्॥ २०॥
पितुर्भर्तुः कलाचार्य-मित्रयोरुपकारिणः। भवेत् कथंचिदानृण्यं जनन्या न कथंचन॥ २१॥
तदा च चौरसंघाताद् वीरो वीरप्रसादतः। स्वक्षेत्रेणाक्षतेनागात् (?) शालभादिव कर्षुकः॥ २२॥
दृष्ट्वा स्वाम्बां[6] गतप्राणां विस्मरभिजसङ्कटम्। किमभूदित्यतः पृच्छन् यथावृत्तं[7] तदाऽशृणोत्॥ २३॥
अनुतप्तः प्रियाबन्धुर्वीरेणाभिदधे तदा। अस्थिभङ्गं कथं नर्म कृतं मद्भाग्यदूषकम्॥ २४॥ 25
स प्राह कोऽपि नर्मोक्त्या किं मातेव विपद्यते। शल्यं बिल्वकवन्मेऽभूदित्याजन्माप्यनिर्गमम्॥ २५॥
वीरः प्राहाथ वैराग्याज्जनन्या मम च स्फुटम्। कीदृग्दूरतरं स्नेहसम्बन्धे पश्यतान्तरम्॥ २६॥
हास्येन मन्मृतिं श्रुत्वा माता सत्येन संस्थिता। सत्येऽपि निधने तस्या वयं किञ्चिन्मुचोऽपि न॥ २७॥
उक्त्वेति कोटिमेकैकां कलत्रेभ्यः प्रदाय सः। शेषः (? षं) श्रीसंघपूजासु चैत्येष्वेवाव्ययद्[8] धनम्॥२८॥
परिग्रहपरित्यागं कृत्वा गार्हस्थ्य एव सन्। गत्वा सत्यपुरे श्रीमद्वीरमाराधयन्मुदा॥ २९॥ 30
उपवासान् सदा चाष्ट कृत्वा पारणकं व्यधात्। समस्तविकृतित्यागादहो अस्य महत्तपः॥ ३०॥

1 B N आन्तरारिपुविध्वंसी। 2 A B N °द्वर्णश्रीवीरः। 3 N °प्रभाव°। 4 N अवेक्ष्यताखान्। 5 N तत्रैवा°।
6 A D स्वां तां। 7 A D यदावृत्तं। 8 N चैत्योघे चाव्य°।

प्रासुकाहारभोजी च स चतुर्विधपौषधी । पुरबाह्ये श्मशानादौ कायोत्सर्गं निशि व्यधात् ॥ ३१ ॥
दिव्यमानुषतैरश्चोपसर्गेषु स सासहिः । तप्यमानस्तपस्तीव्रमभवत् तीर्थसन्निभः ॥ ३२ ॥
निजक्रियानुमानेन गुरोरुत्कण्ठितः सदा । एकचित्तो महावीरपादान् ध्यायत्यमन्दधीः ॥ ३३ ॥
§ २. प्रदोषसमयेऽन्येद्युः प्रतिमार्थं बहिर्भुवि । गच्छन् दूरात् समायान्तं[1] मायान्तं जङ्गमं शमम्[2] ॥ ३४ ॥
5 चारित्रमिव मूर्त्तिस्थं **मथुरा**याः समागतम् । स वर्षशतदेशीयमपश्यद् **विमलं गणिम्** ॥ ३५ ॥
क्षितिपीठलुठन्मूर्द्धा सर्वाभिगमपूर्वकम् । ववन्दे नन्दितस्तेन धर्मलाभाशिषा च सः ॥ ३६ ॥
अकाले नगराद्बाह्ये धर्मशील ! क गम्यते । इत्युक्ते प्रान्तभूमीषु व्युत्सर्गायेति सोऽवदत् ॥ ३७ ॥
गणिः प्राहातिथिस्तेऽहमङ्गविद्योपदेशतः । मिलित्वा ते स्वकालाय यामि **शत्रुञ्जये** गिरौ ॥ ३८ ॥
**वीरो**ऽवदथ श्रेयो दिनं मे यद्भवादृशाः । प्रसादमसमं कृत्वोत्कण्ठन्ते किल मादृशाम् ॥ ३९ ॥
10 निशां सफलयाम्यद्य तत्पूज्यवरिवस्यया । चिन्तामणिं करप्राप्तं कः कुण्ठोऽप्यवमन्यते ॥ ४० ॥
इत्युक्त्वा दर्शयन् स्वीयोपाश्रयं तस्य सद्गुरोः । शुश्रूषां च स्वयं चक्रे देहविश्रामणादिकाम् ॥ ४१ ॥
ततश्चाह मुनीशोऽङ्गविद्यां त्वमशठः पठ । प्रभावकः श्रुतज्ञानाद् भवितासि मते यथा ॥ ४२ ॥
**वीरः** प्राह गृहस्थानां कथं सिद्धान्तवाचना । नाधीतं पुनरायाति वृद्धत्वाद् विदधे किमु ॥ ४३ ॥
अथाह गुरुरध्वन्यो भवान्तरगतावहम् । अङ्गविद्या महाविद्या तवायाता स्वयंवरा ॥ ४४ ॥
15 तदर्थं ज्ञापयिष्यामि शीघ्रं तत्पुस्तकं पुनः । **थारापद्रपुरे** श्रीमान्नाभेयस्य जिनेशितुः ॥ ४५ ॥
चैत्यस्य शुकनासेऽस्ति तं गृहीत्वा च वाचयेः ।
इत्युक्त्वाऽदात् परिव्रज्यां गुरु**र्वीर**स्य सादरम् ॥ ४६ ॥–युग्मम् ।
दिशन् ग्रन्थस्य तस्यार्थं दिनत्रयमवास्थित । ततो जगाम स श्रीमान् **विमलो विमलाचले**[3] ॥ ४७ ॥
तत्र श्रीवृषभं नत्वा तदेकध्यानमानसः । संन्यासात् त्रिदिवं प्राप पापमातङ्गकेसरी ॥ ४८ ॥
20 ततो गुरुनियोगेन **वीर**स्तत्र पुरे ययौ । स्थाने च तत्समादिष्टे श्राद्धेभ्यः प्राप पुस्तकम् ॥ ४९ ॥
अधीता तेन तत्राङ्गविद्या च गणिविद्यया । तस्याः प्रसादतः सोऽभूदुग्रशक्तिर्महातपाः ॥ ५० ॥
अभूदथ परीवारस्तस्य प्राचीनपुण्यतः । अबुद्धबोधने सैष नियमं चाग्रहीत् तदा ॥ ५१ ॥
§ ३. विजिहीर्षुर्गणि**र्वीरो**ऽ**णहिल्लपुर**संमुखम् । आजगाम **स्थिरग्रामे विरूपानाथ**संश्रिते ॥ ५२ ॥
स चात्र **वलभीनाथा**पराख्यो व्यन्तराधिपः । रात्रौ देवगृहे सुप्तं हन्ति मर्त्यं महारुषा ॥ ५३ ॥
25 तद्बोधाय महामातृपीठान्तर्गणिविद्यया । अर्द्धतुर्यकरोन्मानं कुण्डं कृत्वा महोदयः ॥ ५४ ॥
तत्रस्थैः स निषिद्धोऽपि महाशक्तिभरात् ततः । अस्थादस्थानमीदृक्षभयानामक्षतव्रतः ॥ ५५ ॥–युग्मम् ।
झञ्झादिवातवह्निन्यवजानन् सुराद्रिवत् । कायोत्सर्गे स्थितः कार्यो[4] निष्प्रकंपो मनस्यपि ॥ ५६ ॥
उद्यत्किलिकिलारावैर्भीतिं बाह्येष्वयं वदन् । आययौ **वलभीनाथ** आतङ्कं विदधज्जने ॥ ५७ ॥
व्यकार्षीद्धस्तिनः पूर्वं जङ्गमानिव पर्वतान् । तमाश्रितान् सुरेन्द्रेण सह वैरभयादिव ॥ ५८ ॥
30 तस्य रेखां न लङ्घन्ते मर्यादां सागरा इव । उन्नतावनतैः शुण्डादण्डैरुड्डामरा अपि ॥ ५९ ॥
ततः प्रसर्पतः सर्पान् सदर्पानैक्षयत्तराम् । दृष्टिनिर्यद्विषज्वालान् भस्मीभूतान्यदेहिनः ॥ ६० ॥
तां रेखामनतिक्रम्य स्थितांस्तान् वीक्ष्य निर्जरः । विलक्ष इव दध्यौ स महिमाऽस्य जनातिगः ॥ ६१ ॥
ततो राक्षसरूपाणि भैरवाणि चकार सः । क्षोभाय तस्य नाभूवन् प्रतिकूलानि तान्यपि ॥ ६२ ॥

---

1 B समायातं मायातं; A समायांतमायांतं । 2 N शिवम् । 3 N विमलेऽचले । 4 B N काये ।

अनुकूलैरथारम्भि मुमुक्षोर्विप्रलम्भनम् । माता-पिता-कलत्राणि क्रन्दन्ति स समैक्षयत् ॥ ६३ ॥
तत्त्वज्ञस्तान्यवाज्ञासीत्, मोहविन्ध्यस्य[1] कोन्नतिः । **वीरे** कुम्भोद्भवेऽमुत्र दक्षिणां दिशमाश्रिते ॥ ६४ ॥
कलावपि[2] सुराचाल्यं[3] सत्त्वं वीरतपोनिधेः[4] । द्रष्टुं पूर्वाचलं प्राप्ते कौतुकादिव भास्करे ॥ ६५ ॥
प्रत्यक्षीभूय गीर्वाण उवाचासौ तपोनिधिम् । अखर्वपर्वताध्वन्यध्वन्यवध्वस्तथाक्रमम् ॥ ६६ ॥
पूर्वं सुरनरेशानां मानभङ्गो मया दधे । त्वां विना नैव केनापि शक्तेर्मे[5] स्खलनं कृतम् ॥ ६७ ॥ 5

§ ४. पूर्वास्थ**डङ्करीपुर्या**मागतोऽहं शिवालये । **भीमेश्वरा**ख्ये तल्लिङ्गमप्रणम्यैव च स्थितः ॥ ६८ ॥
चरणौ तज्जलाधारे[6] न्यस्य सुप्तश्च तत्क्षणे । तत्रागत्य नृपोऽपृच्छन्मां सविस्मयमानसः ॥ ६९ ॥
नमसि त्वं न किं देवमज्ञानाच्छक्तितोऽथवा । तदाऽवोचमहं राजन्! हेतुं ते कथये स्फुटम् ॥ ७० ॥
शिवोऽयं शक्तिसम्बद्धो मां दृष्ट्वा लज्जया नतः । भविष्यति यतः पुंसो लज्जा पुंसोऽग्रतो भवेत् ॥ ७१ ॥
एवंस्थितेऽपि देवेऽस्मिन् नमति[7] प्राकृतो जनः । पशूपमे जने तस्य का व्रीडास्था ममापि च ॥ ७२ ॥ 10
चेत् ते[8] कौतुकमत्रास्ति मत्प्रणामात् तदास्य चेत् । उत्पातः कोऽपि जायेत तत्र दोषोपमोऽपि मे ॥ ७३ ॥
इत्युक्त्वा विरते मय्यब्रवीद् भूमिपतिस्ततः । वैदेशिका भवन्त्यत्र स्फारवाक्यक्रमाः सदा ॥ ७४ ॥
चर्मदेहः पुमान् देवसाम्यं स्वस्येह मन्यते । हास्यं सचेतनानां तद् बालानां विप्रलम्भनम् ॥ ७५ ॥
या काचिदस्ति ते शक्तिस्तां प्रयुंक्ष्व न ते पुनः । दोषोऽणुरपि कार्येऽत्र नगरं साक्षि वर्त्तताम् ॥ ७६ ॥
श्रुत्वेति प्रणतिं यावत् कुर्वे संगत्य सन्निधौ । त्रादकृत्य तावत् पुस्फोट लिङ्गं लोकस्य पश्यतः ॥ ७७ ॥ 15
अथाहमवदं भीतिसम्भ्रमभ्रान्तलोचनम् । भूपालं बालवत्कण्ठरोधाव्यक्तस्वरं तदा ॥ ७८ ॥
मदुत्तेजनदम्भेन त्वया वैरं प्रसाधितम् । लिङ्गेऽस्मिन्नर्चनाक्लेशैर्दूनेन चिरकालतः ॥ ७९ ॥
श्रुत्वेति पादयोर्मौलिं मेलयित्वा तु नीतिभूः । राजा सपरिवारोऽयमाह देवस्त्वमेव नः ॥ ८० ॥
तीर्थं त्वयैव दत्तं स्यादन्यथोच्छ(त्स ?)न्नमेव तत् । शिवस्त्वमेव देहस्थः पाषाणा [9]इतरे पुनः ॥ ८१ ॥
एवमुक्ते योगपट्टेनावेष्टयमिदं त्वहम् । सम्बद्धद्विदलं तत्र लिङ्गमद्यापि पूज्यते ॥ ८२ ॥ 20
**महाबोधे** ततो बौद्धविहारशतपञ्चकम् । तान् विजित्य मया भग्नं तत्र सामर्थ्यतो निजात् ॥ ८३ ॥
तथा मम प्रतिज्ञाऽस्ति संमुखं विजये ध्रुवम् । **महाकाला**ख्यया शम्भुर्भीत्या मे कोणके स्थितः ॥ ८४ ॥
**सोमेश्वर**जयार्थं च चलित्वागममत्र च । सोऽत्रागत्यामिलद् भीतो मम ब्राह्मणरूपतः ॥ ८५ ॥
प्राहैतद्[10] दारुणं क्षेत्रं पवित्रं दत्तमत्र च । महोदयाय तद् याचे दातुमीशो भवान् यदि ॥ ८६ ॥
मयोचेहं क्षमो दाने मार्गणानां यथेप्सितम् । घट-मूटक-टंकानां लक्षैराज्याग्रहेमसु ॥ ८७ ॥ 25
ततोऽसौ ब्राह्मणोऽवोचन् मम किंचिद् ददस्व तत् । याचस्वेति मदुक्ते च स प्राह श्रूयतां ततः ॥ ८८ ॥
अत्र क्षेत्रे स्थिरो भूत्वाऽवतिष्ठस्व महाबल! । श्रुत्वेति ज्ञानतो यावदीक्षे तावत् स शङ्करः ॥ ८९ ॥
आतङ्कात् **सोमनाथा**ख्यः छलितुं मां समाययौ । वामनो बलिभूपालमिव वृद्धद्विजच्छलात् ॥ ९० ॥
दण्डं कमपि मे देहि यथा सत्यः प्रतिश्रवः । मम स्यादन्यथात्रापि स्थितस्तेऽस्मि व्यथावहः ॥ ९१ ॥
अथ स प्राह नाहंयुस्त्वय्यहं तद्वचः शृणु । मद्यात्रा तस्य पूर्णा स्याद् यस्त्वामत्र[11] नमस्यति ॥ ९२ ॥ 30
अन्यथाऽर्द्धफला[12] सा स्यादित्युक्त्वा स्वाश्रयं गतः । वर्त्ततेऽद्यापि तत्तादृग् मद्वचः को विलङ्घयेत् ॥ ९३ ॥
ततः प्रभृत्यसौ ग्रामः **स्थिर**मित्याख्ययाऽभवत् । मम शम्भोश्च वाचां हि स्थिरता नहि दुर्लभा ॥ ९४ ॥

---

1 A मोहवंध्यस्य; N मोहाविंध्यसकोन्नतेः । 2 N कुभावेऽपि । 3 N D सुराचाल्यः । 4 A B °निधिः । 5 N भक्तौ मे । 6 N तु जलाधारे । 7 A B D तमपि । 8 N चित्ते । 9 N पाषाण इतरः । 10 N प्राहेदं° । 11 N °स्यायस्तामद्य न पश्यति । 12 N °र्द्धकला ।

इति न स्खलिता शक्तिर्मम मर्त्यैः सुरैरपि । त्वं तु श्वेताम्बराकारो दैवं मत्तोऽपि शक्तिमान् ॥ ९५ ॥
नावमन्तुमहं शक्तः समीक्षे दूरतः स्थितः । रेखाकुण्डं ज्वलत्कारवदिदं शङ्कितः पुमान् ॥ ९६ ॥
तुष्टस्तव तपःशक्तेः वाञ्छितं प्रार्थय द्रुतम् । अक्षेपात् पूरयिष्ये तत् कल्पवृक्ष इव ध्रुवम् ॥ ९७ ॥
पारयित्वा ततो **वीरः** परमेष्ठिनमस्कृतेः । जगादनादरा अत्र सर्वसङ्गमुचो वयम् ॥ ९८ ॥
तथापि किञ्चिन्मद्भक्तेर्गृहाणेत्युदितेऽमुना । मुनिराह वधं रक्ष तवाप्यायुर्विनश्वरम्[1] ॥ ९९ ॥
दुर्गतौ पतने हेतुर्मौलोऽयं प्राणिनां वधः । तथाख्यातैः पुरावृत्तैर्हर्षो मे नाऽत्यहंकृतेः ॥ १०० ॥
महादानेषु सामर्थ्यमात्मनश्च त्वयोदितम् । जीवाभयप्रदानं च सर्वेभ्योऽप्युत्तमं पुनः ॥ १०१ ॥
हर्षादाह स तथ्यं ते वचो जानेऽहमप्यदः । स्वेच्छाचारी परीवारो मम तस्य प्रियं त्विदम् ॥ १०२ ॥
त्वद्वचोभिः सुधासारसारैरित्यतिहर्षितः । प्रासादजगतीमध्ये जीवानां रक्षये वधम् ॥ १०३ ॥
श्री**वीरो**ऽप्याह भूयात् तद् राज्ञा ज्ञातमिदं वचः । आचन्द्रकालिकं वृत्तमावयोः पुण्यहेतवे ॥ १०४ ॥

§५. **अणहिल्लपुरे** [2]ऽवासीच्चक्रवर्तीव [3]नूतनः । श्रीमान् **चामुण्डराजा**ख्यस्तत्रास्मिन्[4] समये नृपः ॥१०५॥
अज्ञापयदिदं च श्री**विरूपानाथ** एव तत् । प्रधानैस्तैर्नृपस्याथ हर्षात् तत्राययौ च सः ॥ १०६ ॥
सत्कर्मणि चिकीर्षात्र कस्य नो महतेत्यसौ । विज्ञाय जीवरक्षायै तच्छासनमचीकरत् ॥ १०७ ॥
आहूतश्च ततो राज्ञा पुनरप्याययौ तदा । **अणहिल्लपुरं** धीरस्तत्राबोधानबोधयन् ॥ १०८ ॥
आचार्यत्वप्रतिष्ठाऽस्य विदधे परमर्षिभिः । सूरिभि**र्वर्द्धमाना**ख्यैः सङ्घाध्यक्षं महोत्सवात् ॥ १०९ ॥
तत्र श्री**वलभीनाथः** श्री**वीर**प्रभुभक्तितः । प्रत्यक्षीभूय धर्माख्यां शृणोत्यस्याग्रतः स्थितः ॥ ११० ॥
परं क्रीडाप्रियत्वेन नरं प्रेक्ष्य सलक्षणम् । अवतीर्यास्य देहे च क्रीडते पीडया विना ॥ १११ ॥
श्रीमान् **वीरो**ऽपि तद् दृष्ट्वाऽवादीदेवं न सांप्रतम् । व्यन्तराधीश ! ते केलिं मनुष्या असहिष्णवः ॥११२॥
एवं निवृत्ते चासौ प्रभुणा स निषेधितः । तथाह मम तोषस्य फलं किमपि नात्र वः ! ॥ ११३ ॥

§६. उवाच [5]प्रभुरानन्दात् तव सामर्थ्यमस्ति किम् । **अष्टापदा**चले गन्तुं श्रीजैनभवनोन्नते ॥ ११४ ॥
स देवः प्राह शक्तिर्नो गन्तुं नावस्थितौ पुनः । तत्र सन्ति यतः सूरे ! व्यन्तरेन्द्रा महाबलाः ॥ ११५ ॥
अवस्थातुं न शक्नोमि तत्तेजः सोढुमक्षमः । याममेकं त्ववस्थास्ये चल[6] चेत् कौतुकं तव ॥ ११६ ॥
अधिकं तु क्षणं मित्र ! त्वमवस्थास्यसेऽथ चेत् । तत्त्रैव भवानत्रागन्ताऽहं तु ध्रुवं ह्यदः ॥ ११७ ॥
मुनौ तत्प्रतिपेदाने धवलं धवलं ततः । विकृत्यारोहयत् तं च वस्त्रवेष्टितमस्तकम् ॥ ११८ ॥
क्षणेनैव ययौ तस्य गिरेर्मूर्ध्नि स ऊर्द्धगः । वृषादुत्तारयामास चैत्यद्वारे ततो मुनिम् ॥ ११९ ॥
द्वारपाञ्चालिकाजानुपाश्चात्यशुषिरान्तरे[7] । तस्थौ निलीय तत्रस्थदेवज्योतिरसासहिः ॥ १२० ॥
[8]गव्यूतत्रितयोच्छ्रायं योजनायामविस्तरम् । चतुर्द्वारं महाचैत्यमाद्यचक्रिविधापितम् ॥ १२१ ॥
दृष्ट्वा प्रमाणवर्णैश्च प्रतिमास्ता यदो(थो)दितेः । एकैकस्मान्नमस्काराच्छ्रु(स्तु ?)त्वा स प्राणमन्मुदा ॥१२२॥
प्रभावनाविधित्सायै तदभिज्ञानमानयत् । पंच शाल्यक्षतान्[9] तस्मादग्रहीन्नाकिढौकितान् ॥ १२३ ॥
निशायाः प्रथमे यामे चलितस्तीर्थयात्रया । प्राग्वत् स पुनरायाच्च द्वितीये घटिकाधिके ॥ १२४ ॥
सौरभामोदतः शालेरक्षतानामुपाश्रयः । विमानमिव सौधर्म[10] सुमनःसंवृतो बभौ ॥ १२५ ॥
पृष्टे मुनिभिराहाथ गुरुर**ष्टापदाचले** । वन्दयध्वं मुदा देवान् श्राद्धाग्रेऽकथयंश्च तम् ॥ १२६ ॥
चैत्ये च मिलितः सङ्घः श्रीमान् भूमिपतेः स च । आख्यापयन् महाश्चर्यं कौतुकादाययौ स च ॥१२७॥

1 A °निंकृंतनं । 2 N °पुरे चासी° । 3 N °वर्त्ती च । 4 N °स्तत्रापि । 5 N पुनरा° । 6 N बलवत् । 7 N शिखरान्तरे। 8 A गव्यूति° । 9 A D शाल्यकृतान् । 10 N साधर्मं ।

तेनाकार्यानुयुक्तोऽथाभिज्ञानं पुनराह च । चतुर्विंशतिसंख्यानां स्वभावाख्यानतोऽर्हताम् ॥ १२८ ॥

तथा हि–

**बे धउला बे सामला बे रत्तुप्पलवन्न ।**
**मरगयवन्ना बिन्नि जिण सोलस कंचणवन्न ॥ १२९ ॥**
**नियनियमाणिहिं कारविय भरहिं जि नयणाणंद ।** 5
**ते मइं भाविहिं वंदिया ए चउवीस जिणंद ॥ १३० ॥**

राजाह स्वेष्टदेवानां स्वरूपकथने वरा । नास्ति प्रतीतिरस्माकमन्यत् किमपि कथ्यताम् ॥ १३१ ॥
अक्षतान् दर्शयामास [1]निःसामान्यगुणोदयान् । वर्णैः सौरभविस्तारैरपूर्वान् मानवव्रजे ॥ १३२ ॥
ते द्वादशाङ्गुलायामा अङ्गुलं पिण्डविस्तरे । अवेष्ट्यन्त सुवर्णेन महीपालेन ते ततः ॥ १३३ ॥
पूर्वं तु रु ष्क भ ङ्ग स्य तेऽभूवंस्तदुपाश्रये । अपूज्यन्त च सङ्घेनाष्टापदप्रतिबिम्बवत् ॥ १३४ ॥ 10
एवं चातिशयैः सम्यक् सामान्यजनदुस्तरैः । श्रीमान् **वीरगणिः** सूरिर्विश्वपूज्यस्तदाऽभवत् ॥ १३५ ॥

§७. अन्यदा मन्त्रिणं **वीरं** रहः प्राह महीपतिः । पूर्वोदिष्टक्रमाभ्याय्याद् राज्यं पालयतो मम ॥ १३६ ॥
सुमनोमण्डलाश्रेयो वचःसिद्धिकुलालयः । **वीरो** गुरुश्च मन्त्री च ममार्त्तीन्दुविधुन्तुदः ॥ १३७ ॥
एकश्चिन्ताज्वरोऽस्माकं [2]महाबाधानिबन्धनम् । श्रुत्वा प्रतिविधेहीदं कस्याग्रेऽन्यस्य[3] कथ्यते ॥ १३८ ॥
अथाह **वीर**मन्त्रीशः स्वामिन्नादिश्यतां मम । क्रियते भृत्यलेशेन किं मयाऽन्यदधीशितः ॥ १३९ ॥ 15
राजाह मम शुद्धान्तकान्तानां सम्भवे सति । स्रावो भवति गर्भस्य तत्र प्रतिविधिं कुरु ॥ १४० ॥
इत्यादिष्टो महामात्यः श्रीमद्वीरप्रभोः पुरः । व्यजिज्ञपत् ततः सूरिमूरीकृत्य स चाब्रवीत् ॥ १४१ ॥
अभिमन्त्रितवासैर्मे क्रियतामभिषेचनम् । अवरोधपुरन्ध्रीणां प्रजायन्ते सुता यथा ॥ १४२ ॥
एवं च विहिते मन्त्रिप्रभुणा वचने गुरोः । श्रीमद्**वल्लभ**राजाद्या नरेन्द्रस्याभवन् सुताः ॥ १४३ ॥

§८. **अष्टादशशतीदेशे** विहरन्नन्यदा प्रभुः । अगा**दुंबरिणी**ग्रामे ग्राम्येतरनरान्विते ॥ १४४ ॥ 20
विशुद्धोपाश्रये तत्र स्थितो गत्वा निशागमे । व्युत्सर्गाय बहिःप्रेतवनमाशिश्रिये मुदा ॥ १४५ ॥
**परमार**वराम्नायसद्वंशाकरहीरकः । **रुद्रा**भिधः स तं दृष्ट्वा नमश्चक्रेऽतिभक्तितः ॥ १४६ ॥
उवाच च मुने ! मास्थाः श्वापदव्रजसंकुले । श्मशाने ग्राममध्ये न आगच्छ प्रासुकाश्रये ॥ १४७ ॥
तिष्ठ सौख्यात् तदाकर्ण्य मुनिः प्राह गुरोः सदा । कायोत्सर्गे बहिः पृथ्व्यां कुर्वन्ति प्रभवस्ततः (?) ॥१४८॥
आधेया नाधृती राजपुत्र[4] ! श्रुत्वेति सोऽगमत् । निजं धाम ततस्तस्य जंबूपायनमागमत् ॥ १४९ ॥ 25
स सिस्वादयिषुर्जंबूफलान्यत्रोटयत् तदा । वृन्तं तत्र कृमिं दृष्ट्वा शूकया[5] धूनयन् शिरः ॥ १५० ॥
जगाद कृमयः सूक्ष्माः फलेष्वपि यदाऽभवन्[6] । अदृष्टं किमिव स्वाद्यं निशादौ हि विवेकिना ॥ १५१ ॥
आहूय ब्राह्मणैः पृष्टैः प्रायश्चित्तं प्रदेशितम् । विशुद्धये द्विजन्मभ्यो देयः स्वर्णमयः कृमिः ॥ १५२ ॥
दध्यौ श्रुत्वेति संकल्प्य द्वितीयोऽपि कृमिर्मया । हन्तव्यो नावगच्छामि ततो धर्ममम् हृदि ॥ १५३ ॥
प्रष्टव्यश्च विचारोऽयं कस्यापि शमिनो मुनेः । प्रातर्जैनमुनिं ग्राममध्यमागतमानमत् ॥ १५४ ॥ 30
ततः पप्रच्छ सन्देहं गुरुर्विस्तरतोऽवदत् । जीवाः सर्वत्र तिष्ठन्ति द्विधा स्थावरजङ्गमाः ॥ १५५ ॥
स्थावरास्ते धरा-नीर-वह्नि-वात-महीरुहः । जङ्गमाश्च परिज्ञेयास्ते द्वि-त्रि-चतुरिन्द्रियाः ॥ १५६ ॥
पञ्चेन्द्रियाः सुरास्तिर्यग्नरनैरयिका अपि । गजमीनमयूराद्याः स्थलनीलाम्बरोपगाः ॥ १५७ ॥
वनस्पतिस्तथा जीवाधारो मूलफलादिके । उत्पद्यन्ते विपद्यन्ते यज्जीवास्तत्र भूरिशः ॥ १५८ ॥

1 N तैः सामा° । 2 D महद्° । 3 N नास्य । 4 N D राजपुत्रः । 5 N शंकया । 6 N भवेद् ।

धर्मः कृपैव जीवानां विवेकस्थ ! विचारय । इति संयमिनो वाचं स श्रुत्वा प्रत्यबुध्यत ॥ १५९ ॥
सर्वं हित्वाऽग्रहीद् दीक्षामक्षीणश्रेयसे स च । शास्त्रेष्वधीतपूर्वी च जैनागममवाचयत् ॥ १६० ॥
महाविद्वान् स गीतार्थः क्रिया-ज्ञानद्वयेऽप्यभूत् । प्रदीप इव दीपेन गुरुणा समदीधितिः ॥ १६१ ॥
श्रुतज्ञानात् परिज्ञाय स्वायुःपर्यन्तमन्यदा । गच्छभारं च शिष्येशे रुद्रे[1] श्रीवीरसूरयः ॥ १६२ ॥
श्रीचन्द्रसूरिरित्याख्यापूर्वकं ते न्यवेशयन् । स्वयं तु योगरोधेन तस्थुर्निष्कंपसञ्चराः ॥ १६३ ॥
हित्वा देहं जरद्गेहमिव दिव्यभुवं ययुः । श्रीवीरप्रभवो बोधशक्तेराधारतां गताः ॥ १६४ ॥
वसु-वह्नि-निधौ (९३८) जन्म, व्रतं व्योम-वसु-ग्रहे (९८०) ।
इंद्र-नंद-ग्रहे (९९१) वर्षेऽवसानमभवत् प्रभोः ॥ १६५ ॥
गार्हस्थ्यं समभवत् तस्य द्विचत्वारिंशतं समाः । एकादशव्रतेऽथायुस्त्रिपञ्चाशत्समा अभूत् ॥ १६६ ॥

श्रीवीरसूरेर्विदितं चरित्रं कर्णावतंसं कुरुतात्र सन्तः ।
उत्कण्ठते श्रीजिनबोधिलक्ष्मीर्यथा महानन्दसुखप्रबोधा ॥ १६७ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ वीरस्य वृत्तं प्रभोः
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गस्तिथीसंख्यया ॥ १६८ ॥

नवोऽयं प्रद्युम्नः शिवसहचरः प्रीतिमतुलां
ददौ सन्तोषाय प्रकटरिपवे यो रतिमपि ।
कवित्वक्षो[2]दायामृतरुचिसवित्वं च मनुते
शुभध्यानोपायं परिहृतमदादिः स जयतु ॥ १६९ ॥

॥ ग्रं० १७१ अ० ५ । उभयं ३५११ अ० ५ ॥

॥ इति श्रीवीरगणिप्रबन्धः ॥

---

1 A B N भद्रे । 2 D °क्षोभाया° ।

# १६. वादिवेतालश्रीशान्तिसूरिचरितम् ।

पातु वो वा दि वे ता लः कालो दुर्मत्रवादिनाम् । **शान्तिसूरिः** प्रभुः श्रीमान् प्रसिद्धः सर्वसिद्धिदः ॥१॥
व्याचिख्यासां तदाख्याने दधे तद्भक्तिभावितः । अनूरुः सूरसेवातः किं न व्योमाध्वजाङ्घिकः ॥ २ ॥
§ १. अस्ति श्री**गूर्जरो** देशः कैलासाद्रिनिभः श्रिया । धनदाधिष्ठितश्चारुमानसामानसङ्गमः ॥ ३ ॥
**अणहिल्लपुरं** तत्र नगरं न गरप्रभम् । वचः प्रभु द्विजिह्वानां यत्र सद्वचनामृतैः ॥ ४ ॥ 5
श्री**भीम**स्तत्र राजासीद् धृतराष्ट्रभवद्विषन् । सदाप्रामार्ज्जुनश्लोको[1] लोकोत्तरपराक्रमः ॥ ५ ॥
श्री**चन्द्रगच्छ**विस्तारिशुक्तिमुक्ताफलस्थितिः । **थारापद्र** इति ख्यातो गच्छः स्वच्छधियां निधिः ॥ ६ ॥
सच्चारित्रश्रियां पात्रं सूरयो गुणभूरयः । श्रीमद्**विजयसिंहा**ख्या विख्याताः सन्ति विष्टपे ॥ ७ ॥
श्रीमत्**संपक**चैत्यस्य प्रत्यासन्नाश्रयस्थिताः । भव्यलोकारविन्दानां बोधं विदधतेऽर्कवत् ॥ ८ ॥
तथा– 10
§ २. श्री**पत्तन**प्रतीचीनो लघुरप्यलघुस्थितिः । **उन्नतायु**रितिग्राम उन्नतायुर्जनस्थितिः ॥ ९ ॥
तत्रास्ति **धनदेवा**ख्यः श्रेष्ठी **श्रीमालवंश**भूः । अर्हत्गुरुपदद्वन्द्वसेवामधुकरः कृती ॥ १० ॥
धनश्रीरिव मूर्तिस्था **धनश्री**स्तस्य गेहिनी । तत्पुत्रो **भीम**नामाऽभूत् सीमा प्रज्ञाप्रभावताम् ॥ ११ ॥
कम्बुकण्ठच्छत्र[2]मौलिराजानुभुजविस्तरः । छत्रपद्मध्वजास्तीर्णपाणिपादसरोरुहः ॥ १२ ॥
सर्वलक्षणसंपूर्णः पुण्यनैपुण्यशेवधिः । विज्ञातो गुरुभिः सङ्घभारधौरेयतानिधिः ॥ १३ ॥ 15
अलंचक्रुर्विहारेण ग्राममग्राम्यबुद्धयः । तत्ते वितन्द्रविज्ञानविज्ञातशुभसम्भवाः ॥ १४ ॥
श्रीनाभेयं प्रणम्याथ चैत्ये तस्य गृहं ययुः । अर्थयांचक्रिरे **भीमं धनदेव**समीपतः ॥ १५ ॥
कृतपुण्योऽस्मि मत्पुत्रश्चेत् पूज्यार्थप्रसाधकः । इत्युक्त्वा प्रददौ पुत्रममुत्रेह च शर्मणे ॥ १६ ॥
एवं तैस्तदनुज्ञातैरदीक्ष्यत शुभे दिने । **भीमो** मिथ्यादृशां भीम उदग्रप्रतिभाबलः ॥ १७ ॥
**शान्ति**रित्यभिधा तस्य वैधेयस्य[3] व्यधीयत । सकलाः स कलाः प्राप पूर्वसङ्केतिता इव ॥ १८ ॥ 20
समस्तशास्त्रपाथोधिपारदृश्वाऽभवत् क्रमात् । विचिन्त्येति निजे पट्टे प्रभवस्तं न्यवेशयन् ॥ १९ ॥
स्वगच्छभारं विन्यस्य तत्र प्रायोपवेशनात् । प्रेत्यार्थं साधयामासुस्तेऽथ संसृतिसंहृतौ ॥ २० ॥
§ ३. **अणहिल्लपुरे** श्रीमद्**भीमभूपाल**संसदि । **शान्तिसूरिः**[4] कवीन्द्रोऽभूद् वादिचक्रीति विश्रुतः ॥२१॥
अन्यदा**ऽवन्ति**देशीयः[5] सि द्ध सा र स्व तः कविः । ख्यातोऽभूद् **धनपाला**ख्यः प्राचेतस इवापरः ॥२२॥
स गोरसे त्र्यहातीते साधुभिर्जीवदर्शनात् । यैरबोध्यत तत्पूज्यश्री**महेन्द्र**गुरोर्गिरा ॥ २३ ॥ 25
गृहीतदृढसम्यक्त्वः कथां **तिलकमञ्जरीम्** । कृत्वा व्यजिज्ञपत् पूज्यान् क एनां शोधयिष्यति ॥ २४ ॥
विचार्य तैः समादिष्टं सन्ति श्री**शान्तिसूरयः** । कथां ते शोधयिष्यन्ति सोऽथ **पत्तन**मागमत् ॥२५॥
तदा च सूरयः सूरितत्त्वस्मरणतत्पराः । देवतावसरे ध्यानलीना आसन् मठान्तरा[6] ॥ २६ ॥
प्रतीक्ष्याणां प्रतीक्षायामुपयुक्तः कवीश्वरः । नूतनाध्ययनं शिष्यमेकमद्भुतमब्रवीत् ॥ २७ ॥
तथा हि– 30

**खचरागमने खचरो हृष्टः खचरेणाङ्कितपत्रधरः ।**
**खचरचरं खचरश्चरति खचरमुखि ! खचरं पश्य ॥ २८ ॥**

---

1 N °र्जुनश्रीको । 2 N °कंठच्छत्र° । 3 A B विधेयस्य; 'विनयस्थस्य' इति D टिप्पणी । 4 N °सूरेः । 5 N अन्यदा-वंघ्रिदेशीयः । 6 N मठांतरे ।

इदं व्याख्याहि चेद् वेत्ति लघु[1] पण्डितमण्डनः । इत्याकर्ण्य स च व्याख्यादिदं वृत्तमकृच्छ्रतः ॥ २९ ॥
श्रुत्वेति [2]स कविस्वामी प्राह हृष्ट इदं कियत् । श्री**शान्त्याचार्य**हस्तस्य प्रभावो बहुरीक्ष्यते ॥ ३० ॥
उपन्यासं प्रतिष्ठायास्तत्र सर्वज्ञ-जीवयोः । ऊर्जस्विगर्जिपर्जन्यध्वनिना विदधेऽथ[3] सः ॥ ३१ ॥
सिंहासनमलंचक्रे गुरुभिस्तावदाशु तैः । अपरो मातृकापाठोचितशिष्यस्तथोच्यत ॥ ३२ ॥
इदानीं किं कृतं वत्स ! स्तम्भावष्टम्भिना त्वया । स प्राहानेन यत्प्रोक्तं तत्सर्वमवधारितम् ॥ ३३ ॥
वदेति प्रभुभिः प्रोक्ते निस्वानध्वानधीरगीः । उज्जग्राहातिकुग्राहव्यूहसंहरणाग्रहः ॥ ३४ ॥
श्रुत्वेति **धनपालो**ऽपि चमत्कारातिपूरितः । उवाच भारती किं नु प्राप्ता बालर्षिरूपतः ॥ ३५ ॥
प्रेषयध्वं मया सार्धममुमेव धियां निधिम् । गुरुसन्देहसन्दोहशैलदम्भोलिविभ्रमम् ॥ ३६ ॥
अथ ते सूरयः प्रोचुः कालोऽस्य पठितुं ततः । क्लिष्टप्रमाणशास्त्राणि परग्रन्थेष्वधीतिनः ॥ ३७ ॥
पात्रं चेच्छास्त्रपाथोधे[4]र्वादिकल्लोलितं भवेत् । इत्याशा नस्ततो नायमध्यायाद् व्यतिरिच्यते ॥ ३८ ॥
सिद्धसारस्वतो विद्वानथोचे प्रभुभिर्ध्रुवम् । देशः शृङ्गारणीयोऽयं **मालवः** स्वक्रमाम्बुजैः ॥ ३९ ॥
इत्याकर्ण्य प्रभुः प्रोचे चेन्निर्बन्धोऽयमत्र वः । आप्रष्टव्यस्तदा[5] सङ्घः प्रधानाचार्यसङ्गतः ॥ ४० ॥

§ ४. ततस्तदनुमत्या ते**ऽवन्तिदेशे** व्यजीहरन् । वृताः[6] श्री**भीमभूपाल**प्रधानैः सपरिच्छदैः ॥ ४१ ॥
पथि सञ्चरतां तेषां निशि सङ्गत्य भारती । आदेशं प्रददे वाचा प्रसादातिशयस्पृशा ॥ ४२ ॥
स्व-स्वदर्शननिष्णाता ऊर्ध्वे हस्ते त्वया कृते । चतुरङ्गसभाध्यक्षं विद्रविष्यन्ति वादिनः ॥ ४३ ॥
सक्रोशं योजनं **धारानगरी**तः समागमत् । तस्य तत्र गतस्य श्री**भोजो** हर्षेण संमुखः ॥ ४४ ॥
एकैकवादिविजये पणं संविदधे तदा । मदीया वादिनः केन जय्या इत्यभिसन्धितः ॥ ४५ ॥
लक्षं लक्षं प्रदास्यामि विजये वादिनं प्रति । **गूर्जर**स्य बलं वीक्ष्यं श्वेतभिक्षोर्मया ध्रुवम् ॥ ४६ ॥–युग्मम् ।
विश्वदर्शनवादीन्द्रान् स राज्ञः पर्षदि स्थितः । जिग्ये चतुरशीतिं च स्वस्वाभ्युपगमस्थितान् ॥ ४७ ॥
अजैषीदूर्ध्वहस्तेन प्रत्येकं प्रतिवासरम् । अनायासादसौ सारवक्ता न्यायैकनिष्ठधीः ॥ ४८ ॥
लक्षांस्तत्संख्यया दत्त्वा द्रव्यस्याथ महीपतिः । तत आह्वास्त तत्कालं सिद्धसारस्वतं कविम् ॥ ४९ ॥
ततोऽनुययुस्ते तं स मीतो द्रव्यव्ययादतः । पंचकोटिव्ययप्राप्तो वादिपंचशतीजये ॥ ५० ॥
किं नामामुष्य जैनर्षे**र्धनपाल**स्ततोऽब्रवीत् । **शान्ति**रित्यभिधा सूरेरस्य श्रुत्वेति[7] भूपतिः ॥ ५१ ॥
**शान्ति**नाम्ना प्रसिद्धोऽस्ति वे ता लो वा दि नां पुनः । ततो वादं निषेध्यासौ सम्मान्यातः प्रहीयते ॥ ५२ ॥
त(त्व ?)त्कथाशोधकत्वेन नामुमत्र विसूत्रये । अन्यथा मत्सभां जित्वा को यात्यक्षतविग्रहः ॥ ५३ ॥
स्युः पञ्चदश लक्षेण सहस्रा **गूर्जरा**वनेः । एवमङ्केऽथ तज्जज्ञे लक्षद्वादशकं ततः ॥ ५४ ॥
तथा षष्टिसहस्राश्च मया दत्तास्ततोऽधुना । कथा शोधयितव्याऽऽशु **धनपाल**धियांनिधेः ॥ ५५ ॥
पर्यालोच्येति तेनाथ स्थापिताः **शान्तिसूरयः** । लक्षैर्द्वादशभिस्तत्र देशे[8] चैत्यान्यचीकरत् ॥ ५६ ॥
अवशिष्टास्तथाषष्टिः[9] सहस्रा भूपदत्ततः । **थारापद्रा**भिधद्रङ्गे प्रहिताः प्रभुभिस्तदा ॥ ५७ ॥
तत्रस्थादिप्रभोश्चैत्ये मूलनायकवामतः । तैर्देवकुलिकाऽकारि सशालश्च रथो महान् ॥ ५८ ॥
कथा च **धनपाल**स्य तैरशोध्यत निस्तुषम् । वा दि वे ता ल निरुदं तदैषां प्रददे नृपः[10] ॥ ५९ ॥
कवीश्वरानुयाताश्च **गूर्जरेश**धरावधिः । प्रत्यावृत्याथ ते प्रापुः **पत्तनं** श्रीनिकेतनम् ॥ ६० ॥

---

1 N तत्तु° । 2 N श्रुवेति । 3 N च । 4 N °पाथोधिः । 5 N °पृष्टव्यः सदा । 6 N हृताः । 7 N शुद्देवि । 8 N देवो । 9 N °चतुःषष्टिः । 10 B N वादिवेतालबिरुदं सूरीणां प्रददे नृपः ।

§५. अग्रे च तत्र वास्तव्य**जिनदेव**स्य धीमतः। श्रेष्ठिनस्तनयः **पद्म**नामा दष्टो महाहिना ॥ ६१ ॥
मान्त्रिकैः सर्वपक्षीयैर्मन्त्रौषधविजृम्भितैः। अत्यर्थं प्रतिकारेषु कृतेष्वपि न सज्जितः ॥ ६२ ॥
तत उत्पाट्य गर्तायां निक्षिप्तः स्वजनैः सह। सर्पदष्टव्यवस्थेयं[1] पुनरुज्जीवनाशया[2] ॥ ६३ ॥
इति विज्ञापिते शिष्यै**र्जिनदेव**गृहेऽगमन्। सम्बोधनार्थमाचख्युरथ ते प्रभवस्तदा ॥ ६४ ॥
दष्टं दर्शयतास्माकं प्रकाश्य क्षितिमध्यतः। **जिनदेव**स्तदाकर्ण्य श्मशाने तैः समं ययौ ॥ ६५ ॥ 5
भुवमुत्खाय तस्मिंश्च दर्शिते गुरवोऽमृतम्। तत्त्वं स्मृत्वाऽस्पृशन् देहं दष्टश्चासौ समुत्थितः ॥ ६६ ॥
गुरुपादौ नमस्कृत्य **पद्मः** पद्मनिभाननः। प्राहाहं गुरवः सस्वजनाः कथमिहागमन् ॥ ६७ ॥
प्राग्वृत्ते कथिते सद्यो **जिनदेवेन** हर्षतः[3]। उत्सवाद् गुरुभिः सार्धं स स्वं निलयमागमत् ॥ ६८ ॥
तत्पित्राभ्यर्चिताः[4] पूज्या निजमाश्रममाययुः। गुरुर्वेश्मागतश्चोपकर्ता प्राप्येत केन सः ॥ ६९ ॥

§६. अथ प्रमाणशास्त्राणि शिष्यान् द्वात्रिंशतं तदा। अध्यापयन्ति श्री**शान्तिसूरय**श्चैत्यसंस्थिताः ॥ ७० ॥ 10
सूरिः श्री**मुनिचन्द्रा**ख्यः श्री**नड्डूलपुरा**दगात्। **अणहिल्लपुरे** चैत्यपरिपाटीविधित्सया ॥ ७१ ॥
संपत्संपत्तिरम्यश्रीश्री**संपक**जिनालये। नत्वा श्रीवृषभं सूरिवृषभं प्राणमत् ततः ॥ ७२ ॥
प्रमेया दुःपरिच्छेद्या बौद्धतर्कसमुद्भवाः। तेनावधारिताः सर्वेऽन्यप्रज्ञानवगाहिताः ॥ ७३ ॥
अपुस्तकः स ऊर्ध्वस्थो दिनान् [5]पञ्चदशाऽशृणोत्। तत्रागत्य तदध्यायध्यानधीरमनास्तदा ॥ ७४ ॥
बहुशः कथ्यमानेऽपि प्रमेये दुर्घटेऽन्यदा। छात्रेष्वनधिगच्छत्सु पूज्या निर्वेदमागमन् ॥ ७५ ॥ 15
भसिते[6] हुतमित्युक्त्वा गुरवोऽत्र निःशश्वसुः। तदा श्री**मुनिचन्द्रा**ख्यः सूरिः पूज्यान् व्यजिज्ञपत् ॥७६॥
सपुस्तकाः पाठका ये प्रष्टप्रज्ञाबलोन्नताः[7]। किं वदन्ति त एवात्र पुरा गुरुपुरस्कृताः ॥ ७७ ॥
अपरो बहिरायातः सर्वथानुपलक्षितः। सोऽपि किं लभते वक्तुं नवेत्यादिशत प्रभो! ॥ ७८ ॥
श्रुत्वेति हृच्चमत्कारि तद्वचः प्रभवोऽवदन्। प्रज्ञायां पक्षपातो नः शिष्याणां नान्यहेतुषु ॥ ७९ ॥
इतोऽह्नि षोडशेऽतीते यद् व्याख्यातं सुदुर्घटम्। अस्माभिस्तदभिप्रायाद्यथोक्तं सुविवेचनम् ॥ ८० ॥ 20
निशमय्येत्यसौ प्राज्ञस्तदधीतदिनावधिः। सर्वेष्वहस्सु यथोक्तं तद्वक्तव्यं[8] यथातथम् ॥ ८१ ॥
सद्यश्च तैर्यदाख्यातं परप्राज्ञैः सुदुःश्रवम्। सर्वानुवादसंवादमवादीद् विशदं ततः ॥ ८२ ॥
श्री**शान्तिसूरि**भिस्तोषपोषतः परिषस्वजे। प्रोचे च संनिवेश्याङ्के रत्नं[9] रेणुवृतं भवान् ॥ ८३ ॥
वत्स! प्रमाणशास्त्राणि पठाशठमतिर्मम। पार्श्वे नश्वरदेहस्य लाभमत्र गृहाण भोः! ॥ ८४ ॥
पुनर्व्यज्ञपयत्[10] सूरि**र्मुनिचन्द्रः**[11] प्रभो! कथम्। अध्येयं स्थानकाभावे दुष्प्रापं स्थानमत्र यत् ॥ ८५ ॥ 25
ततस्ते टंकशालायाः पश्चाद्भागे समार्पयन्। आश्रयार्थं गृहं चारु श्राद्धपार्श्वाद् विदूषणम्[12] ॥ ८६ ॥
षड्दर्शनप्रमाणानां शास्त्राण्यक्लेशतोऽथ सः। अध्यैष्ट ज्ञापक-ज्ञात्रोर्योगो दुर्लभ ईदृशः ॥ ८७ ॥
ततः सुविहितानां हि साधूनामाश्रयाः पुरे। बभूवुरत्र संवित्त्या[13] सर्वसच्चरित्रिणाम् ॥ ८८ ॥
उत्तराध्ययनग्रंथटीका श्री**शांतिसूरि**भिः। विदधे वादिनागेन्द्रसन्नागदमनीसमा[14] ॥ ८९ ॥
शिष्येण **मुनिचन्द्र**स्य सूरेः श्री**देवसूरि**णा। तन्मध्यत उपन्यस्तस्त्रीनिर्वाणबलादिह ॥ ९० ॥ 30
पुरः श्री**सिद्धराज**स्य जितो वादे दिगंबरः। तदीयवचसां निश्रा[15] विद्वद्दुःसाधसाधिका[16] ॥ ९१ ॥

---

1 N °व्यवस्थायां। 2 N °जीवनाशयः। 3 N हर्षितः। 4 N °भ्यर्थिताः। 5 N दिनानां च दशा°। 6 N भस्मनि। 7 N °प्रज्ञावतोन्नताः। 8 N तदनूद्य। 9 N रत्नरेणु°। 10 N व्यजिज्ञपत्; A विज्ञपयत्। 11 N °चन्द्रप्रभो। 12 N °विभूषणम्। 13 N B संवृत्त्या। 14 N °दमनी हि सा। 15 N मिश्रा। 16 A °साधका।

§७. अथान्येद्युर्जिते धर्मे धनपालेन मालवे । एक एव महीपीठे कविस्त्वमिति मानिते ॥ ९२ ॥
प्रोक्ते च धनपालेन बुधोऽणहिल्लपत्तने । अस्ति श्वेताम्बराचार्यः शान्तिसूरिः परो न हि ॥९३॥
दिनैः कियद्भिरभ्यागात् तं द्रष्टुं धर्मकोविदः । स्वर्गश्रीगर्वसर्वस्वहरं श्रीपत्तनं पुरम् ॥ ९४ ॥
थारापद्रमहाचैत्यप्रत्यासन्नमठं ततः । श्रुत्वागादपराह्णेऽसौ बुधदर्शनकौतुकी[1] ॥ ९५ ॥
5 तदानीं स प्रभुर्देहे कण्डूपीडित औषधम् । विमृज्य[2] पिहितद्वाराररिस्तदुचितांशुकः ॥ ९६ ॥
संवीक्ष्य कुञ्चिकाछिद्राज्ज्ञापितं यतिभिर्गुरुम् । पृच्छयैव विजेष्येऽमुं धर्मो ध्यात्वेति तं जगौ ॥ ९७ ॥
'कस्त्व'मत्रोत्तरं सूरिः प्रादाद् 'देव' इति स्फुटम् । 'देवः क' इति तत्प्रश्ने त्व'हमि'त्युत्तरं ददौ ॥ ९८ ॥
'अहं क' इति पृच्छायां 'श्वे'ति वाचमवोचत । 'श्वा क' एतादृशि प्रश्ने 'त्वमि'त्युत्तरमातनोत् ॥ ९९ ॥
पुनः 'त्वं क' इति प्रश्ने वितीर्णं प्राग्वदुत्तरम् । तयोश्चक्रकमेतद्धि जज्ञेऽनन्तमनन्तवत् ॥ १०० ॥
10 ततश्चमत्कृतः सोऽभूद् द्वार उद्घटिते सति । स तत्त्वोपप्लवग्रन्थाभ्यासोपन्यासमातनोत् ॥ १०१ ॥
वितण्डाविरते चात्र श्रीशान्त्याचार्य उज्जगौ । [3]कृतसर्वानुवादोऽत्र प्रतिज्ञस्तं विवादिनम् ॥ १०२ ॥
ममार्पय निजं वेषं योगपट्टादिकं तथा । अङ्गचेष्टाः समस्तास्ते विधीयन्ते तथा [4]तथा ॥ १०३ ॥
तथा कृते च सर्वत्र धर्मोऽवाचतिविस्मितः । पादावस्य प्रणम्याह नाहमीशो[5] भवज्जये ॥ १०४ ॥
बुधस्त्वमेव च श्रीमन्! धनपालोदितं वचः । प्रतीतमेव मच्चित्ते तादृक्किमनृतं वदेत् ॥ १०५ ॥
15 इत्युक्त्वा प्रययौ स्थानं निजं स निरहंकृतिः । अहंकारश्रियां नामाभिचारपरमौषधिः ॥ १०६ ॥

§८. अथ द्रविडदेशीयोऽन्यदा वादी समागमत् । अव्यक्तं भैरवाशब्दानुकारं [6]किमपि ब्रुवन् ॥१०७॥
प्रभवस्तस्य भाषायामभिज्ञा अपि कौतुकात् । भित्तिस्थे घोटके हस्तं दत्त्वाभिदधिरे स्फुटम् ॥ १०८ ॥
वद त्वमन्यदेशीयवादिना सह सङ्गतम् । अव्यक्तवादी पशुवद् योग्योऽयं तिर्यगाकृतेः ॥ १०९ ॥
वदतीत्थं प्रभौ सांक्रामिकसारस्वतोत्तरे । तुरङ्गमप्रतिकृतिस्तरलं साऽवदद् भृशम् ॥ ११० ॥
20 विकल्पैर्गहनैः कष्टादप्यशक्यानुवादिभिः । तथा निरुत्तरः पश्चाकारं स्वं तेन लम्भितः ॥ १११ ॥
गते निर्विद्यतेऽस्मिंश्च कांदिशीके जनोऽवदत् । अस्मिंस्तपति नास्त्यन्यो वादी वाग्देवतावरात् ॥ ११२ ॥

§९. विहारं कुर्वतां तेषां थारापद्रपुरेऽन्यदा । देवी श्रीनागिनी व्याख्याक्षणे नित्यं समृच्छति ॥११३॥
तत्पट्टे वासनिक्षेपमासनायाथ ते व्यधुः । देव्या सह गुरोस्तस्य समयोऽयं प्रवर्तते ॥ ११४ ॥
अन्यदा वासनिक्षेपं वैचित्त्यात् ते विसस्मरुः । आसने प्रेषणे चात ऊर्ध्वस्था सा चिरं स्थिता ॥ ११५ ॥
25 ध्यानस्थानां निशामध्ये सद्यो देवीस्वरूपिणी । मध्येमठमुपालम्भप्रदानायाययौ तदा ॥ ११६ ॥
उद्योतं सूरयो दृष्ट्वा स्त्रियं[7] चातिरतिस्थितिम्[8] । प्रवर्तकं मुनिं प्रोचुर्नारी प्राप्ताऽत्र किं मुने ! ॥ ११७ ॥
वेद्म्यहं[9] नेति तेनोक्तेऽवदद् देवी स्वयं तथा । वासालाभान्ममायांह्री सव्यथावूर्ध्वसंस्थिते: ॥ ११८ ॥
श्रुतज्ञानमयाङ्गानां भूयाच्चेद् वोऽपि विस्मृतिः । आयुः षण्मासशेषं तदभिज्ञानादतः प्रभोः ॥ ११९ ॥
स्वगच्छसंस्थितिं कृत्वा प्रेत्य पथ्यं विधत्त तत् । ज्ञाते ममोचितं ह्येतत् [10]कालविज्ञापनं प्रभोः ॥ १२० ॥
30 इत्युक्त्वाऽन्तर्हितायां च देव्यां प्रातर्निजं गणम् । सङ्घं च मन्त्रयित्वा द्वात्रिंशत्सत्पात्रमध्यतः ॥ १२१ ॥
सुधीश्वरास्त्रयः सूरिपदे तेन निवेशिताः । श्रीवीरसूरिः श्रीशालिभद्रः[11] सूरिस्तथापरः ॥ १२२ ॥
श्रीसर्वदेवसूरिश्च मूर्ता रत्नत्रयीव सा । सद्वृत्तालङ्कृता दीप्यमाना सत्तेजसा बभौ ॥ १२३ ॥
नाभूत् श्रीवीरसूरीणां कथंचित् सूरिसन्ततिः । तेषां राजपुरिग्रामे श्रीनेमिः शाश्वतं वपुः ॥ १२४ ॥

---

1 N कौतुकः । 2 N संमृज्य । 3 N कृतः सर्वा° । 4 N यथा तथा । 5 N °मीशे । 6 B N °शब्दान् हाकारं; A शब्दान् कारं किमपि न ब्रुवम् । 7 D स्वयं; A स्त्रियं । 8 N स्थिताम् । 9 N वेद्मीदं । 10 N कालं विज्ञापितं । 11 D शीलभद्रः ।

शाखाह्वये परे विद्वत्कोटीरपरिवारिते । सूरयोऽद्यापि वर्तन्ते संघोद्धारधुरन्धराः ॥ १२५ ॥
श्रीशान्तिसूरयः श्रीमदुज्जयन्ताचलं प्रति । यशोभिधानसुश्राद्धसुतसाढेन[1] संगताः ॥ १२६ ॥
कृत्वा प्रयाणमल्पैश्च दिनैस्तं गिरिमभ्ययुः । श्रीनेमिं हृदये ध्यात्वा चक्रुः प्रायोपवेशनम् ॥ १२७ ॥
धर्मध्यानाग्निनिर्दग्धभवार्तिविततैधसः । अज्ञातक्षुत्तृषानिद्राप्रभृत्यन्तःप्रतीतयः ॥ १२८ ॥
समाधिना व्यतीत्याथ दिनानां पञ्चविंशतिम् । वैमानिकसुरावासमधिजग्मुर्जगन्नताः ॥ १२९ ॥ 5

श्रीविक्रमवत्सरतो वर्षसहस्रे गते सषण्णवतौ (१०९६) ।
शुचिसितिनवमीकुजकृत्तिकासु शान्तिप्रभोरभूदस्तम् ॥ १३० ॥

इत्थं श्रीशान्तिसूरेर्वरचरितमिदं वादिवेतालनाम्नः
पूर्वश्रीसिद्धसेनप्रभृतिसुचरितव्रातजातानुकारम् ।
अग्रप्रातीनविद्वज्जनपरिणतामादधानं[2] (?) श्रिये स्ता- 10
दन्याचाचन्द्रकालं विबुधजनशतैः सम्यगभ्यस्यमानम् ॥ १३१ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ शृङ्गोऽगमत् षोडशः
श्रीप्रद्युम्नमुनीन्दुना विशदितः श्रीशान्तिसूरिप्रथा ॥ १३२ ॥ 15

॥ ग्रंथ १३६, अ० ९ । उभयं ३६४६, अक्षर १७ ॥

॥ इति श्रीवादिवेतालप्रबन्धः ॥

---

1 N °सोढेन । 2 N °परिणमतामादधान (?) ।

# १७. श्रीमहेन्द्रसूरिचरितम् ।

§१. श्रीमन्**महेन्द्रसूरि**भ्यो नमस्कारं प्रशास्महे । सत्यंकारमिवागण्यपुण्यपण्यस्थिरीकृतौ ॥ १ ॥
श्रीमतो **धनपालस्य** सालस्यः को गुणस्तुतौ । यस्याविचलविश्वासे ब्राह्मी तथ्यवचःक्रमा ॥ २ ॥
श्लाघ्यः स **धनपालः** स्यात् काल आन्तरविद्विषाम् । यद्बुद्धिरेव सिद्धाज्ञा मिथ्यात्वगरलच्छिदे ॥ ३ ॥
5 तद्वृत्ते वाचमाधास्ये दास्ये तिष्ठन् गुरुक्रमे । विधास्ये स्वस्य नैर्मल्यमादास्ये जन्मनः फलम् ॥ ४ ॥
**अस्त्यवन्त्यभिधो** देशो देशोनं वाडवामुखम् । यस्य येन वसन्त्यत्र[1] कुलानि नवभोगिनाम् ॥ ५ ॥
आधारः पुरुषार्थानां पुरी **धारा**ऽस्ति यत्पुरः । दानकल्पद्रुबाहुल्यादसारा साऽमरावती ॥ ६ ॥
तत्र श्री**भोजराजो**ऽस्ति राजा निर्व्याजवैभवः । अवैरं यन्मुखाम्भोजं भारती-श्रीनिवासयोः ॥ ७ ॥
यद्यशःस्वर्णदीतीरे प्रवृत्तव्योमविद्रवे । विधिः पूजाविधौ नालिकेरवद्विधुमादधे ॥ ८ ॥

10 §२. इतश्च **मध्यदेशीयसंकाश्यस्थान**संश्रयः । **देवर्षि**रस्ति देवर्षिप्रभावो भूमिनिर्जरः ॥ ९ ॥
तस्य श्री**सर्वदेवा**ख्यः सूनुरन्यूनसत्क्रियः[2] । ब्राह्मण्यनिष्ठया यस्य तुष्टाः शिष्टा विशिष्टया ॥ १० ॥
तस्य पुत्रद्वयं जज्ञे विज्ञेशैरर्चितक्रमम् । आद्यः श्री**धनपाला**ख्यो द्वितीयः **शोभनः** पुनः ॥ ११ ॥
तत्रान्यदाऽऽययौ **चान्द्रगच्छ**पुष्करभास्करः । श्री**महेन्द्र**प्रभुः पारदृश्वा श्रुतपयोनिधेः ॥ १२ ॥
जनानां संशयोच्छेदमादधद् व्याख्यया तया । विश्रुतः **सर्वदेवे**न द्विजराजेन स श्रुतः ॥ १३ ॥
15 स चास्योपाश्रये प्रायादुचितं मानितश्च तैः । दिनत्रयमहोरात्रं तथैवास्थात् समाधिना ॥ १४ ॥
पप्रच्छ प्रभुरप्येवं परीक्षाहेतवे हि नः । सुधियो यूयमायाथ कार्यं वाप्यस्ति किंचन ॥ १५ ॥
स्वयंभुवोऽपरा[3] मूर्तिः प्राहासौ द्विजसत्तमः । महात्मनां हि माहात्म्यवीक्षणे सुकृतार्जनम् ॥ १६ ॥
कार्यं नः किञ्चिदप्यन्यदस्ति तत्रार्थिनो वयम् । रहस्यं 'यदनाख्येयमितरेषां गुणोदधे[5]' ! ॥ १७ ॥
स्थित्वैकान्ते प्रभुः प्राह ख्यात यत् कथनोचितम् । इति श्रुत्वा जगादासौ पिता नः पुण्यवानभूत् ॥ १८ ॥
20 राजपूज्यस्ततो लक्षैर्दानं प्रापदसौ सदा । गृहे मम निधेः[6] शङ्का तृष्णाविलसितं ह्यदः ॥ १९ ॥
तं सर्वज्ञातविज्ञाना यूयं यदि ममोपरि । अनुग्रहधिया ख्यात परोपकरणोद्यताः ॥ २० ॥
ब्राह्मणः सकुटुम्बस्तत्स्वजनैः सह खेलति । दानभोगैस्ततः श्रीमन् ! प्रसीद प्रेक्षयस्व तत् ॥ २१ ॥–युग्मम् ।
सूरिर्विमृश्य तत्पार्श्वाल्लाभं शिष्योत्तमस्य सः । आह सम्यग् भवत्कार्यं विधास्यामो धियां निधे ! ॥ २२ ॥
परं नः किं भवान् दाता रहः कथ्यं हि नस्त्वया । सामिस्वामिन् ! समस्तस्य दास्यामि तव निश्चितम् ॥ २३ ॥
25 अहं स्वरुचि भावत्कवस्तुनोऽर्धं[7] समाददे । साक्षिणोऽत्र विधीयन्तां द्रव्यव्यतिकरो ह्ययम् ॥ २४ ॥
व्याख्याता वेदवेदाङ्गशास्त्रेषु वितथं कथम् । वदाम्यत्र तथाप्यस्तु विश्वासाय प्रभोरिदम् ॥ २५ ॥
साक्षीकृत्य ततस्तत्रस्थितान् मेने गुरुस्तदा । हृष्टेन गृहमागत्य पुत्रयोर्जगदे तथा ॥ २६ ॥
शुभेऽह्नि सूरिमाह्वास्त ज्ञानाज्ज्ञात्वा स तद्भुवम् । निश्चित्योवाच तद्द्रव्यं खानयित्वाऽऽप स द्विजः ॥ २७ ॥
चत्वारिंशत्सुवर्णस्य टङ्कलक्षा विनिर्ययुः । दृष्टेऽपि निःस्पृहोत्तंसः सूरिः स्वोपाश्रयं ययौ ॥ २८ ॥
30 श्रीमतः **सर्वदेवस्य महेन्द्रस्य** प्रभोस्तथा । [8]दान-ग्रहणयोर्वादो वर्षं यावत् तदाऽभवत् ॥ २९ ॥
अन्यदा सत्यसन्धत्वाद् ब्राह्मणः सूरिमाह च । देयद्रव्येऽत्र ते दत्ते स्वगृहं प्रविशाम्यहम् ॥ ३० ॥
सूरिः प्राहाभिरुचितं[9] ग्रहीष्ये वचनं मम । भवत्विदं ततो मित्रं गृहाण त्वं द्विजोऽवदत् ॥ ३१ ॥

1 N येन च सन्त्यत्र । 2 N न्यूनविक्रमः । 3 N स्वयंभुवः परा । 4 N वदना°; A यदिना° । 5 A °दधेः । 6 A D निवेशका । 7 N वस्तुतो । 8 B दानाग्रहण° । 9 N प्राहातिरुचितं ।

सूरिराह सुतद्वन्द्वाद् देह्येकं नन्दनं मम । सत्यप्रतिज्ञता चेत् ते न वा गच्छ गृहं निजम् ॥ ३२ ॥
इतिकर्तव्यतामूढो द्विजः कष्टेन सोऽवदत् । प्रदास्यामि ततो वेश्म निजं चिन्तातुरो ययौ ॥ ३३ ॥
तत्रानास्तृतखट्वायां शिष्ये[1]ऽसौ निद्रया विना । दृष्टश्च **धनपालेना**गतेन नृपसौधतः ॥ ३४ ॥
विषादः किंनिमित्तोऽयं नन्दने मयि तिष्ठति । यथादिष्टकरे तत् त्वमाख्याहि मम कारणम् ॥ ३५ ॥
ततः प्राह पिता वत्स ! सत्पुत्रा हि भवादृशाः । पित्रादेशविधाने स्युरीदृग्गाढाभिसन्धयः ॥ ३६ ॥ 5
ऋणतः पितरं पाति[2] नरकादुद्धरत्यथ । सद्वार्ति च प्रदत्ते यो वेदे प्रोक्तः सुतः स च ॥ ३७ ॥
श्रुति-स्मृति-पुराणानामभ्यासस्य कुलस्य च[3] । फलं तदेव युष्माकं यद् ऋणादस्मदुद्धृतिः ॥ ३८ ॥
ततः शृण्ववधानात् त्वं सन्ति जैना महर्षयः । **महेन्द्रसूरयो** यैस्ते द्रव्यमीदृक् प्रदर्शितम् ॥ ३९ ॥
यथाभिरुचितं चैषामर्धदेयं प्रतिश्रुतम् । ततः पुत्रद्वयादेकं याचन्ते करवै हि किम् ॥ ४० ॥
सङ्कटादमुतो वत्स ! त्वयैव ह्यधुना वयम् । मोच्यामहे ततस्तेषां शिष्यो मत्कारणाद् भव ॥ ४१ ॥ 10
कोपगर्भं तदाह श्री**धनपालो** धियां निधिः । तातोक्तं भवता यादृग् नेदृक् कोऽप्युचितं वदेत् ॥ ४२ ॥
**सांकाश्यस्थान**संकाशा वयं वर्णेषु वर्णिताः । चतुर्वेदविदः साङ्गपारायणभृतः सदा ॥ ४३ ॥
तथा श्री**मुञ्जराज**स्य प्रतिपन्नसुतोऽभवत् ( ऽभवम् ? ) । श्री**भोज**बालसौहार्दभूमिर्भूमिसुरो ह्यहम् ॥४४॥
तत्पूर्वजानिह स्त्रीयान् पुत्रो भूत्वा प्रपातये । श्वभ्रे पतितशूद्राणां दीक्षया ह्यवगीतया ॥ ४५ ॥
एकस्त्वमृणतो मोच्यः पात्याः सर्वेऽपि पूर्वजाः । इमं कुव्यवहारं नाधास्ये[4] सज्जननिन्दितम् ॥ ४६ ॥ 15
कार्येणानेन नो कार्यं मम स्वरुचितं कुरु । तातमित्यवमत्यामुं स तस्मादन्यतो ययौ ॥ ४७ ॥
अश्रुपूरप्लुताक्षोऽसौ निराशो गुरुसङ्कटे । यावदस्ति समायातस्तावदागात् सुतोऽपरः ॥ ४८ ॥
पृष्टस्तेनापि दैन्येऽत्र निमित्तं स तदाऽवदत् । **धनपालेन** कुत्रापि कार्ये[5] प्रतिहता वयम् ॥ ४९ ॥
भवान् बालस्ततः किंनु तत्र प्रतिविधास्यते । गच्छ स्वकर्मभोक्तारो भविष्यामः स्वलक्षणैः ॥ ५० ॥
निराशं वाक्यमाकर्ण्य तत्पितुः **शोभनो**ऽवदत् । मा तात ! विह्वलो भूया मयि पुत्रे सति ध्रुवम् ॥ ५१ ॥ 20
**धनपालो** राजपूज्यः कुटुम्बभरणक्षमः । निश्चितस्तत्प्रसादेन भवतादिष्टमाचरे ॥ ५२ ॥
वेद-स्मृति-श्रुतिस्तोमपारगः पण्डितोऽग्रजः । कृत्याकृत्येषु निष्णातः स वेवेक्तु यथारुचि ॥ ५३ ॥
अहं तु सरलो बाल्यादेतदेव विचारये । पित्रादेशविधेरन्यो न धर्मस्तनुजन्मनाम् ॥ ५४ ॥
अत्र कृत्यमकृत्यं वा नैवाहं गणयाम्यतः । कूपे क्षिप निपादानां मामर्पय यथारुचि ॥ ५५ ॥
श्रुत्वेति सर्वदेवश्च तं बाढं परिषस्वजे । मामृणान्मोचयित्वा त्वं समुद्धर महामते ! ॥ ५६ ॥ 25
ततः प्रागुक्तकार्यं तच्छ्रावितोऽसौ सुनोत्तमः । अतिहर्षात् ततः प्राह कार्यमेतत् प्रियं प्रियम् ॥ ५७ ॥
श्रीजैना मुनयः [6]सत्त्वनिधयस्तपसोज्ज्वलाः । तत्संनिधाववस्थानं सद्भाग्यैरेव लभ्यते ॥ ५८ ॥
जीवानुकम्पया धर्मः स च तत्रैव तिष्ठति । चिह्नं यत्सत्यधर्मस्य ज्ञानमीदृक् प्रतीतिदम् ॥ ५९ ॥
कः स्थास्यति गृहावासे विषये [7]चिकिलाकुले । इदं कार्यमिदं कार्यमिति चिन्तार्तिजर्जरे ॥ ६० ॥
बिभेत्युभयथा बन्धुर्वल्लभाया **धनश्रियः** । असन्तुष्टधियस्तिष्ठत्स्वपि भोग्येषु वस्तुषु ॥ ६१ ॥ 30
ममापीदृग्गतिः कन्यासम्बन्धे भाविनी ध्रुवम् । तत्तात ! मत्प्रिये कार्ये शङ्कसे किं निषेधतः ॥ ६२ ॥
तदुत्तिष्ठ कुरु स्नानं देवार्चनमथ क्रियाम् । वैश्वदेवादिकां कृत्वा निर्वृतः कुरु भोजनम् ॥ ६३ ॥
ततो मां तत्र नीत्वा च तेषामङ्के विनिक्षिप । पवित्रये निजं जन्म यथा तत्पदसेवया ॥ ६४ ॥

---

1 N सुप्तो । 2 N याति । 3 N वः । 4 N नादास्ये । 5 D कार्यं । 6 N सत्य° । 7 'चिकिल=पंक' इति D टिप्पणी ।

इत्याकर्ण्य तदा विप्र आनन्दाश्रुपरिप्लुतः । उत्तस्थौ [1]बाढमाश्लिष्य मूर्ध्नि चुम्बितवान् सुतम् ॥ ६५ ॥
ततः सर्वाः क्रियाः कृत्वा भोजनानन्तरं द्विजः । प्रायात् **शोभनदेवेन** सहाचार्यप्रतिश्रये ॥ ६६ ॥
अङ्कमारोपयामास स तेषां वल्लभं सुतम् । यावान्[2] भाति विधातव्यः[3] पूज्यैस्तावानयं सुतः ॥ ६७ ॥
सूरयस्तमनुज्ञाप्यादीक्षयंस्तं सुतं मुदा । तद्दिनान्तः शुभे लग्ने शुभग्रहनिरीक्षिते ॥ ६८ ॥
5 ते विजह्रुः प्रभाते चापभ्राजनविशङ्किताः[4] । **अणहिल्लपुरं** प्रापुर्विहरन्तो भुवं शनैः ॥ ६९ ॥

§ ३. इतश्च **धनपालेन सर्वदेवः** पृथक्कृतः । विकर्मकृन्निधिद्रव्यात् पुत्रं विक्रीतवानिति ॥ ७० ॥
अदृष्टव्यमुखास्ते च दीक्षापतितशूद्रकाः । कौतस्कुताः शमव्याजात् स्त्रीबालादिप्रलम्भकाः ॥ ७१ ॥
निर्वास्यते ततो देशादेषां पापण्डमद्भुतम् । ध्यात्वा विज्ञप्य राजानं तच्चक्रे तेन रोषतः ॥ ७२ ॥–युग्मम् ।
एवं द्वादशवर्षाणि श्री**भोज**स्याज्ञया तदा । न **मालवे** विजह्रे तच्छ्रीश्वेताम्बरदर्शनम् ॥ ७३ ॥
10 स्थितानां **गूर्जरे** देशे **धारा**सङ्घो व्यजिज्ञपत् । श्रीमन्**महेन्द्र**सूरीणां यथावृत्तं यथातथम् ॥ ७४ ॥
इतः **शोभनदेव**श्चाध्यापितः सूरिभिस्तदा । विदधे वाचनाचार्यः शक्रेणापि स्तुतो गुणैः ॥ ७५ ॥
**अवन्ति**सङ्घविज्ञप्तिं श्रुत्वाख्यात् **शोभनो** विभुः । यास्याम्यहं निजभ्रातुः प्रतिबोधाय सत्वरम् ॥ ७६ ॥
दौर्मनस्यमिदं सङ्घे मन्निमित्तं समाययौ । अहमेव प्रतीकारं तत्र सन्धातुमुत्सहे ॥ ७७ ॥
गीतार्थैर्मुनिभिःसार्द्धं प्रभुभिः प्रैष्यताथ सः । **धारापुर**मथायातः प्रयातः प्रौढिमद्भुताम् ॥ ७८ ॥
15 प्राप्ते काले च साधून् स प्रैषीद् गोचरचर्यया । श्रीमतो **धनपाल**स्य गृहे परिचिते चिरम् ॥ ७९ ॥
तत्र तावगतौ साधू विद्वदीशस्तदा च सः । स्नानायोपविवेशाथ स्नेहाभ्यक्त[5]वपुर्दृढम् ॥ ८० ॥
व्याहृत्य धर्मलाभं तौ तस्थतुः [6]स्वस्थचेतसौ । सरत्यस्तीति विदधे **धनपाल**प्रियोत्तरम् ॥ ८१ ॥
प्राह श्री**धनपाल**श्च किंचिद्देह्यनयोर्ध्रुवम् । गृहाद् यान्त्यर्थिनो रिक्ता अधर्मोऽयं यतो महान् ॥ ८२ ॥
उचितान्नं तयाऽऽनीतं गृहीतेऽत्र ततो दधि । द्वितीयमाहृतं पृष्टं तैरेतत् किमहर्भवम् ॥ ८३ ॥
किं दध्नि पूतराः सन्ति नवा यूयं दयाभृतः । एतत्र्यहस्थितं लात नोचेद् गच्छत शीघ्रतः ॥ ८४ ॥
20 तावूचतुरियं रीतिरस्माकं किमसूयसि । असूयया महान् दोषः प्रियवाक्यं हि सुन्दरम् ॥ ८५ ॥
अथ चेत् पृच्छसि भ्रान्तिं विना जीवस्थितिं ध्रुवम् । गोरसेऽह्नद्वयातीते नासत्यं ज्ञानिनां वचः ॥ ८६ ॥
सुधीनाथस्ततोऽवादीत् तदानादीनवं वचः । दर्शयतं प्रतीत्यै नो दध्नि जीवानमूदृशि ॥ ८७ ॥
पूलिकालक्तकस्याथ ताभ्यां तत्र व्यमोच्यत । जीवा दध्नस्ततस्तस्यां द्रागेवारुरुहुस्तदा ॥ ८८ ॥
चलन्तस्ते हि चक्षुष्या अचक्षुष्याः स्थिताः पुनः । तद्वर्णास्तद्रसा जीवास्तदा तेनेक्षिताः स्फुटाः ॥ ८९ ॥
25 मिथ्यात्वस्यावलेपोऽथ तद्वाक्येन विनिर्ययौ । तदा कृतीश्वरस्याहिनाथमन्त्रैर्विषं यथा ॥ ९० ॥
अचिन्तयदसौ धर्म एषां जीवदयोज्ज्वलः । य एष पशुहिंसादिरसौ मिथ्येव लक्ष्यते ॥ ९१ ॥

उक्तं च तेन–

**सव्वत्थ अत्थि धम्मो जा मुणियं ण जिण सासणं तुम्हं ।**
**कणगाउराण कणगं ससियपयं अलभमाणाणं ॥ ९२ ॥**

30 विद्वन्नाथस्ततोऽवादीत् को गुरुः कुत आगमः । भवतां कुत्र वा स्थाने शुद्धे यूयमवस्थिताः ॥ ९३ ॥
श्रुत्वेति वदतस्तौ च श्रूयतामवधानतः । **गूर्जराद्** देशतः श्रीमन्नायाता वयमत्र भोः ॥ ९४ ॥
श्रीमन्**महेन्द्रसूरी**णां शिष्यः श्री**शोभनो** गुरुः । नाभेयभुवनाभ्यर्णे स्थितोऽस्ति प्रासुकाश्रये ॥ ९५ ॥

---

1 N गाढ° । 2 A यावद् । 3 A B N विभातव्यः । 4 D विशंकितः । 5 N स्नेहासक्त° । 6 B D सुस्थ° ।

इत्युक्त्वा जग्मतुस्तौ च निजं स्थानं महामुनी । सुस्नातो [1]भुक्तिपूर्वं च सुधीः प्रायादुपाश्रये ॥ ९६ ॥
अथ श्री**शोभनो** विज्ञोऽभ्युत्तस्थौ गुरुबान्धवम् । आलिलिङ्ग च तेनासौ सोदरस्नेहमोहतः ॥ ९७ ॥
तेन चार्द्धासने दत्तेऽग्रजे नोपाविशत् तदा । ऊचे च पूज्य एव त्वममुं यो धर्ममाश्रयः ॥ ९८ ॥
जिनेन्द्रदर्शनं धर्ममूलं **भोजनृपा**ज्ञया । यन्निर्वास्य मयोपार्जि नान्तस्तस्य महांहसः ॥ ९९ ॥
**सर्वदेवः** पिता त्वं चानुज एतौ महामती । यावेनं सुगुरुं धर्ममाद्रियेथां भवच्छिदे ॥ १०० ॥
वयमत्र पुनर्धर्माभासे धर्मतया श्रिते । स्थिता गतिं न जानीमः कामपि प्रेत्य संश्रयाम् ॥ १०१ ॥
तदाख्याहि मदाम्नायोदधिरत्नानुज स्फुटम् । धर्मं शर्मकरं कर्ममर्मोच्छेदविधायिनम् ॥ १०२ ॥
अथ श्री**शोभनो** विद्वान् बन्धौ[2] स्नेहभरं वहन् । उवाच त्वं कुलाधार ! शृणु धर्मं कृपैव यत् ॥१०३॥
देव-धर्म-गुरूणां च तत्त्वान्यवहितः शृणु । देवो जिनो महामोहस्मरमुख्यारिजित्वरः ॥ १०४ ॥
स्वयं मुक्तः परान्मोचयितुं सामर्थ्यभूर्भृशम् । प्रदाता परमानन्दपदस्य भगवान् ध्रुवम् ॥ १०५ ॥
शापानुग्रहकर्तारो मग्ना विषयकर्दमे । स्त्रीशस्त्राक्षस्रगाधारास्ते देवाः[3] स्युर्नृपा इव ॥ १०६ ॥
गुरुः शमदमश्रद्धासंयमश्रेयसां निधिः । कर्मनिर्जरणासक्तः सदा संचरिसंवरः[4] ॥ १०७ ॥
परिग्रहमहारम्भो जीवहिंसाकृतोद्यमः । सर्वाभिलाषसम्पन्नो ब्रह्महीनः कथं गुरुः ॥ १०८ ॥
सत्यास्तेयदयाशौचक्षमाब्रह्मतपःक्रियाः । मृदुत्वार्जवसन्तोषा धर्मोऽयं जिनभाषितः ॥ १०९ ॥
अवद्यवस्तुदानेन भवेच्च पशुहिंसया । अधर्मो धर्मवत्ख्यातो नार्हः कृत्रिमवस्तुवत्[5] ॥ ११० ॥
समुवाच ततः श्रीमान् **धनपालः** श्रियां निधिः । प्रतिपन्नो मया जैनो धर्मः[6] सद्गतिहेतवे ॥ १११ ॥
ततः श्रीमन्महावीरचैत्यं गत्वा ननाम च । वीतरागनमस्कारं श्लोकयुग्मेन सोऽब्रवीत् ॥ ११२ ॥

तथा हि–

**बलं [7]जगद्ध्वंसनरक्षणक्षमं[8] क्षमा च किं संगमके कृतागसि ।**
**इतीव सञ्चिन्त्य विमुच्य मानसं रुषेव रोषस्तव नाथ निर्ययौ ॥ ११३ ॥**
**कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहो,**
**मितवितरिता मोहेनासौ पुरानुसृतो मया ।**
**त्रिभुवनविभुर्बुद्ध्याऽऽराध्योऽधुना [9]स्वपदप्रदः,**
**प्रभुरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः ॥ ११४ ॥**

अन्यदा पूर्णिमासन्ध्यासमये नृपमब्रवीत् । जैनदर्शनसंचारहेतवे देशमध्यतः ॥ ११५ ॥
राजंस्तव यशोज्योत्स्नाधवलाम्बरविस्तरः । प्रकटस्तमसो हन्ता भूयादर्थप्रकाशकः ॥ ११६ ॥
राजाऽवदन्मया ज्ञातोऽभिसन्धिर्मत्रि( र्मित्र ! )ते[10] ततः । श्वेताम्बराश्चरन्त्वत्र देशे को दर्शनं द्विषन् ॥११७॥
ततो[11] **धारापुरीसङ्घः** संगत्याज्ञापयत् प्रभोः । श्रीमन्**महेन्द्रसूरे**स्तत् तत्रायान्मंक्षु सोऽप्यथ ॥ ११८ ॥
क्रमेण **धनपाल**श्च धर्मतत्त्वविचक्षणः । दृढसम्यक्त्वनिष्ठाभिर्ध्वस्तमिथ्यामतिर्बभौ ॥ ११९ ॥

§ ४. राज्ञा सह **महाकाल**भवने सोऽन्यदा ययौ । तन्मण्डपगवाक्षे चोपाविशच्च शिवाग्रतः ॥ १२० ॥
राज्ञाहूतः स च द्वाराग्रतः स्थित्वा झटित्यपि । व्याघृत्य त्रिस्ततो भूपः पप्रच्छैनं सविस्मयः ॥ १२१ ॥
सखे ! किमिदमित्यत्र पृष्टे स प्राह संगभृत् । देवोऽस्ति शक्तिसम्बद्धो व्रीडया न विलोक्यते ॥ १२२ ॥

---

1 N भक्ति° । 2 N बन्धोः । 3 N देवताः । 4 N सदा चरितसंवरः । 5 N °वस्त्रवत् । 6 N जैनधर्मो । 7 N जग-द्विसन° । 8 N क्षमं । 9 N सुपद° । 10 D °मंत्र ते । 11 A यतो; D घाता ।

राजाह दिवसेष्वेतावत्सु किं त्वीदृशोऽर्चितः । भवता प्राह सोऽहं च बालत्वाल्लज्जितो नहि ॥ १२३ ॥
दिनानीयन्ति लोकश्च भवन्तोऽपीदृशा यतः । शुद्धान्तान्तर्वधूसक्ते त्वय्यपीक्षितुमक्षणः[1] ॥ १२४ ॥
कामसेवापरैः प्राच्यैरपि भूपैर्भवादृशैः । बलित्वादर्चनं त्वस्य प्रवर्तितमिहेदृशः ॥ १२५ ॥

यतः–

5 अवरहं देवहं सिरु पुज्जिअइ महएवह पुणु लिंगु ।
बलिआ जं जि प्रतिष्ठइं तं जणु मन्नइ चंगु ॥ १२६ ॥

स्मित्वा दध्यौ च भूपालो हास्यं सत्यसमं ह्यदः । पृच्छाम्यपरमप्यस्मिन्नेतदुत्तरसंस्पृहः ॥ १२७ ॥
बहिर्भृङ्गिरिटेर्मूर्तिं दृष्ट्वा प्राह च कौतुकात् । एष किं दुर्बलो जल्प[2] ! सिद्धसारस्वतोऽसि भोः ! ॥ १२८ ॥
अथाह धनपालोऽपि सत्योक्तौ भवति क्षणः । अस्तु वा सत्यकथने को दोषो नस्ततः शृणु ॥ १२९ ॥

10 तथा हि–

दिग्वासा यदि तत्किमस्य धनुषा सास्त्रस्य किं भस्मना
भस्माप्यस्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योऽन्यविरुद्धचेष्टितमहो पश्यन्निजस्वामिनं
भृङ्गी शुष्कशिरावनद्धमधिकं धत्तेऽस्थिशेषं वपुः ॥ १३० ॥

15 याज्ञवल्क्यस्मृतिं व्यासो बहिः पार्षदमण्डले । तारं व्याख्याति भूपश्च तत्र शुश्रूषुरासिवान् ॥ १३१ ॥
व्यावृत्य स्थितमद्राक्षीद् वयस्यं च ततोऽवदत् । श्रुतिस्मृतिषु तेऽवज्ञाऽवहितो न शृणोषि यत् ॥ १३२ ॥
सोऽजल्पन्नावगच्छामि तदर्थं व्यस्तलक्षणम् । प्रत्यक्षेण विरुद्धं हि शृणुयात् को मतिभ्रमी ॥ १३३ ॥

कथम्–

स्पर्शोऽमेध्यभुजां गवामघहरो वन्द्या विसञ्ज्ञा द्रुमाः
20 स्वर्गच्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनम् ।
आप्ताश्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान् हविः
स्फीतं फल्गु च वल्गु च श्रुतिगिरां[3] को वेत्ति लीलायितम् ॥ १३४ ॥

अथ निष्पद्यमाने च यज्ञे तत्र महापशोः । बद्धस्य हन्तुमश्रौषीद् दीनारावं महीपतिः ॥ १३५ ॥
एष[4] किं जल्पतीत्युक्ते कविचक्री ततोऽवदत् । भाषामेषां विजानामि तत्सत्यं शृणु तद्वचः[5] ॥ १३६ ॥

25 तथा हि–

अर्काह्निनदलोच्छेदी सत्त्वोल्लासतनुस्थितिः ।
नाम्ना गुणैश्च विष्णुर्यः स कथं वध्यतामजः ॥ १३७ ॥

नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
सन्तुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
30 स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥ १३८ ॥

श्रीभोजः कुपितस्तस्यापसव्यवचनक्रमैः । दध्यावमुं हनिष्यामि विब्रुवन्तं द्विजब्रुवम् ॥ १३९ ॥
साक्षादस्य हतौ किं चापवादः परमो भवेत् । रहः कुत्रापि वेलायां वध्योऽसावेष संश्रवः[6] ॥ १४० ॥

1 N °क्षमः । 2 N जल्पि । 3 N श्रुतिगिरा । 4 N अथ । 5 N मद्वचः । 6 N संश्रयः ।

तदा चागच्छतो राजपथि स्वं मन्दिरं प्रति । वृद्धा स्त्री दृक्पथं प्रायात्[1] तटस्था बालिकान्विता ॥ १४१ ॥
नवकृत्वः शिरो धूनयन्तीं वृद्धां विलोक्य सः । नृपः प्राह किमाहासौ ततोऽवादीत् कृतीश्वरः ॥ १४२ ॥

तथा हि–

किं नन्दी किं मुरारिः किमु रतिरमणः किं हरः किं कुबेरः
किं वा विद्याधरोऽसौ किमथ सुरपतिः किं विधुः किं विधाता । 5
नायं नायं न चायं न खलु नहि न वा नापि नासौ न चैषः
क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हले[2] ! भूपतिर्भोजदेवः ॥ १४३ ॥

श्रुत्वाथ भूपतिर्दध्यौ नववारोचितान् किमु । विकल्पान्नवकृत्वोऽथ [3]नत्वा पर्यहरत् ततः ॥ १४४ ॥
ज्ञानिवद्वदिता कोऽन्य एतं दुर्भाषकं विना । निग्रहार्हः स किं श्रीमन्मुञ्जवर्द्धितविग्रहः ॥ १४५ ॥
कदाचिद् भूपतिर्मित्रं पापर्द्धावाह्वयत् ततः । ययौ स खेटकास्तत्र शूकरं च व्यलोकयन् ॥ १४६ ॥ 10
कामं कर्णान्तविश्रान्तमाकृष्य किल कार्मुकम् । बाणं प्राणं दधद् हस्ते व्यमुञ्चद्भूत्यचक्रदास्यकः ॥ १४७ ॥
पतितोऽसौ किरिर्घोरं घर्घरारावमारसन् । प्राहुर्विज्ञाः प्रभुर्योधः पार्थो[4] वा नान्य ईदृशः ॥ १४८ ॥
पण्डितेशे ततो दृष्टिः श्रीभोजस्यागमत् तदा । किंचिद् वदिष्यथेत्युक्ते स प्राह शृणुत प्रभो ! ॥ १४९ ॥

तथेदम्–

रसातलं यातु यदत्र पौरुषं क नीतिरेषा[5] शरणो ह्यदोषवान् । 15
निहन्यते यद् बलिनापि दुर्बलो हहा महाकष्टमराजकं जगत् ॥ १५० ॥

अन्यदा नवरात्रेषु [5]लिंबजागोत्रजार्चने । राज्ञाथ विहिते हन्यमाने छागशते तथा ॥ १५१ ॥
रक्ताक्षे घातरक्ताक्षे बद्ध्वा खड्गाद् द्विधाकृते । एकघातात् सदेशस्थाः प्रशशंसुर्नृपं हतौ ॥ १५२ ॥
**धनपालो** जगादाथ कारुण्यैकमहोदधिः । एतत्कर्मकृतो विज्ञाः प्रशंसाकारिणोऽपि च ॥ १५३ ॥

यतः– 20

पसुवे रुडंवि[6] विहसियउ[7] निसुणइ साहुक्कारु ।
तं जाणइ नरयहँ दुहहँ[8] दिन्नउ संचक्कारु ॥ १५४ ॥

अन्यदा श्री**महाकाले** पवित्रारोहपर्वणि । महामहेऽगमद् राजा वयस्यं प्रत्युवाच च ॥ १५५ ॥
सखे ! त्वदीयदेवानां कदापि न पवित्रकम् । अपवित्रास्ततस्ते स्यू राजमित्रं ततोऽवदत् ॥ १५६ ॥

तथा हि– 25

पवित्रमपवित्रस्य पावित्र्यायाधिरोहति । जिनः स्वयं पवित्रः किमन्यैस्तत्र पवित्रकैः ॥ १५७ ॥
अपावित्र्यं शिवे चैतद्भक्तमप्यादृतं यतः । लिङ्गार्चानन्तरं[9] याच्यमानाभ्युपगमाद् ध्रुवम् ॥ १५८ ॥
मूर्तिं श्रीकामदेवस्य रतियुक्तां हसन्मुखाम् । तालिकायाः प्रदानायोदितहस्तां नराधिपः ॥ १५९ ॥
पश्यन् पण्डितचण्डांशुमाभाषत सकौतुकः । किमेष तालिकां दित्सुर्हसन् कथयति स्फुटम् ॥ १६० ॥
**धनपालस्ततः** सिद्धसारस्वतवशात् तदा । अवदत् तथ्यमेवाशु ज्ञानी को हि विलम्बते ॥ १६१ ॥ 30

तथेदम्–

स एष भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्ति वपुषाऽधुना विरहकातरः कामिनीम् ।

---

1 N दृक्पथप्राया । 2 N हते: । 3 N तत्रा° । 4 N पार्श्वे । 5 D निंबजा । 6 D रुडेवि । 7 A वहसियउ । 8 A नरह दुहह । 9 N लिंगार्चनं तरं ।

अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥ १६२ ॥

अन्यदा नृपतिः प्राह तव सूनृतभाषणे । अभिज्ञानं किमप्यस्ति सत्यं कथय तन्मम ॥ १६३ ॥
चतुर्द्वारोपविष्टानां केन द्वारेण निर्गमः । स्यादस्माकमिदानीमित्याख्याहि कविवासव ! ॥ १६४ ॥
5 ततोऽसौ पत्रकेऽलेखीदक्षराणि महामतिः । ततः स मुद्रयित्वा च स्थगीवित्तस्य चार्पयत् ॥ १६५ ॥
ध्यायन्निति नृपो द्वारचतुष्कस्येह मध्यतः । एकेन केनचिद् द्वारा गतिर्ज्ञाता भविष्यति ॥ १६६ ॥
ज्ञानिनोऽप्यस्य वचनमत्र मिथ्या करिष्यते । ततो गते गृहं मित्रे भुक्त्वाह्नानं समागमत् ॥ १६७ ॥
मण्डपोपरिभागे च छिद्रं [1]प्रापातयन्नरैः । तेन च्छिद्रेण निर्गत्य राजा स्वरुचितो ययौ ॥ १६८ ॥
तन्मध्याह्ने कवीशं तमाकार्यापृच्छदद्भुतम् । पत्रकं कर्षयित्वा स स्थगीमध्याददर्शयत् ॥ १६९ ॥
10 तत्र चोपरिभागेन निर्यास्यति नृपो ध्रुवम् । इति तथ्यं वचस्तस्य ज्ञात्वा राजा चमत्कृतः ॥ १७० ॥
अन्येद्युः सेतुबन्धेन प्राहिणोन्नृपतिर्नरान् । प्रशस्तिर्विद्यते यत्र विहिता श्रीहनूमता ॥ १७१ ॥
तत्काव्यानयनार्थं ते मधूच्छिष्टस्य पट्टिकाः । निधायाम्भोनिधौ मत्स्यवसाञ्जितविलोचनाः ॥ १७२ ॥
प्रशस्त्युपरि ता[2] बाढं विन्यस्याथ पुनस्ततः । उत्पाट्यापरतैलाक्त[3]पट्टिकासु च मीलिताः ॥ १७३ ॥
ततोऽप्युद्धृत्य पत्राल्यामक्षराण्यलिखन्नराः ।
15 तानि [4]रक्षःकुलानीव खण्डवृत्तान्यतोऽभवन् ॥ १७४ ॥–त्रिभिर्विशेषकम् ॥
राज्ञालोक्यन्त तान्यत्राविशदर्थानि किं पुनः । हट्टे शाकफलानीव खण्डितान्यरसान्यभुः ॥ १७५ ॥
पूरयन्ति निजैः प्रज्ञाविशेषैस्ते महाधियः । परं राज्ञश्चमत्कारकरी कस्यापि नैव वाक् ॥ १७६ ॥
द्विपदी त्रिपदी चैका तन्मध्यादर्पिता ततः । श्रीमतो धनपालस्य बालस्य कविताविधौ ॥ १७७ ॥

तथा हि–

20 (क) 'हरशिरसि शिरांसि यानि रेजुर्हरि हरि तानि लुठन्ति गृध्रपादैः ।'

तथा–

(ख) 'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूतेनाद्य जिता निशा कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरचारिवारवनिताविज्ञापनानन्तरं'

25 वचनानन्तरं विद्वान् ते समस्ये अपूरयत् ।

तथा हि–

(क) 'अयि खलु विषमः पुराकृतानां विलसति जन्तुषु कर्म्मणां विपाकः' ॥ १७८ ॥

तथा–

(ख) 'स्मृत्वा पूर्वसुरं विधाय बहुशो रूपाणि भूपोऽभजत् ॥ १७९ ॥'

30 कीरविद्वान् हसन्नाह जैनोचितमिदं वचः ॥ १८० ॥
एषां[5] मते परीपाकः कर्मणां हि प्रकथ्यते[6] । समस्यापूरणं ह्येतत् सौवीरामोदमेदुरम् ॥ १८१ ॥
कवीन्द्रः प्राह कीरस्य रागः स्याद् वदने ध्रुवः । मलिनाङ्गस्य सत्यं तु सूर्यैः प्रकटयिष्यति ॥ १८२ ॥

---

1 N प्राप्यत यन्नरैः । 2 N उपरितो । 3 N °तैलाक्ष° । 4 A रक्तकू° । 5 N तेषां । 6 A D प्रकथ्यते ।

द्वापंचाशत्पले [1]काले [2]शुध्येच्चेन्मम मानुषम्[3] । अत्रेदृक्षाक्षराण्येवावश्यमीदृक् प्रतिश्रवे ॥ १८३ ॥
कौतुकादथ भूपालस्तत्तथैव व्यधापयत् । राजमित्रं[4] ततः काले शुद्धः शुद्धयशोनिधिः ॥ १८४ ॥
प्रतीत एव राजात्र सत्ये को नाम मत्सरी । अथान्येद्युरपृच्छत् तं सुधीशं **भोजभूपतिः** ॥ १८५ ॥
जैना जलाश्रयद्वारं सुकृतं किं न मन्वते[5] । ततोऽवदत् स तत्रापि सूनृतं सूनृतव्रतः ॥ १८६ ॥

तथा हि– 5

**सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा यथेच्छं**
**विच्छिन्नाशेषतृष्णाः प्रमुदितमनसः प्राणिसार्था भवन्ति ।**
**शोषं नीते जलौघे दिनकरकिरणैर्यान्त्यनन्ता विनाशं**
**तेनोदासीनभावं भजति यतिजनः कूपवप्रादिकार्ये** ॥ १८७ ॥

राजाह सत्यमेवेदं धर्मः सत्यो जिनाश्रयः[6] । व्यवहारस्थितानां तु रुच्यो नैव कथंचन ॥ १८८ ॥ 10
ततो राजसखा प्राह पित्राहमपि पाठितः । किंचिज्ज्ञात्वा मयाश्रायि का कथा त्वबुधे जने ॥ १८९ ॥

यतः–

**त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं**
**स्तेयं हेयं विषयविरतिः सर्वसङ्गान्निवृत्तिः ।**
**जैनो धर्म्मो यदि न रुचितः पापपङ्कावृतेभ्य-** 15
**स्तत्किं न्यूनो घृतमवमतं किं प्रमेहप्रीत्ति नो चेत्*** ॥ १९० ॥

§ ५. **धनपाल**स्ततः सप्तक्षेत्र्यां वित्तं व्ययेत् सुधीः । आदौ तेषां पुनश्चैत्यं संसारोत्तारकारणम् ॥ १९१ ॥
विमृश्येति प्रभोर्नाभिसूनोः प्रासादमातनोत् । बिम्बस्यात्र प्रतिष्ठां च श्री**महेन्द्र**प्रभुर्दधौ ॥ १९२ ॥
सर्वज्ञपुरतस्तत्रोपविश्य स्तुतिमादधे । 'ज य जं तु क प्पे'त्यादि गाथापंचशता मिताम्[7] ॥ १९३ ॥
एकदा नृपतिः स्मार्त्तकथाविस्तरनिस्तुषः । वयस्यमवदज्जैनकथां श्रावय कामपि ॥ १९४ ॥ 20
द्वादशाथ सहस्राणि ग्रन्थमानेन तां ततः । परिपूर्य ततो विद्वत्समूहैरवधारिताम् ॥ १९५ ॥
यथार्थां काचदोषस्योद्धारात् **तिलकमञ्जरीम्** । रसेन कवितारूपचक्षुर्नैर्मल्यदायिनीम् ॥ १९६ ॥
विद्वज्जनास्यकर्पूरपूराभां वर्णसम्भृताम् । सुधीर्विरचयांचक्रे कथां नवरसप्रथाम् ॥ १९७ ॥–त्रिभिर्विशेषकम् ।
रसा नव परां कोटिं प्रापिताः कविचक्रिणा । कथायां तत्समाप्तौ च तद्ध्याने परिवर्तते ॥ १९८ ॥
स्वयूथ्यानामिवामीषां प्रस्तावं ते दधुर्ध्रुवम् । रसानां स ततः षण्णामास्वादमबुधद् बुधः ॥ १९९ ॥ 25
दुहित्रा च ततः पृष्टं तात! ग्रन्थः समापि किम् । अहो स्पर्द्धा पितृध्याने सुताज्ञाने च चित्रकृत् ॥ २०० ॥
अथासौ **गूर्जरा**धीश[8]कोविदेशशिरोमणिः । वा दि वे ता ल वि श दं श्री**शान्त्याचार्य**माह्वयत् ॥ २०१ ॥
अशोधयदिमां चासावुत्सूत्रादिप्ररूपणात्[9] । शब्दसाहित्यदोषास्तु सिद्धसारस्वतेषु किम् ॥ २०२ ॥

§ ६. तस्यां व्याख्यायमानायां स्थालं हैममभोचयत् । भूपालः पुस्तकस्याधो रससङ्ग्रहहेतवे ॥ २०३ ॥
तत्र तद्रसपीयूषं पूर्वमाहृतवान्[10] नृपः । आधिव्याधिसमुच्छेदहेतुमक्षयतृप्तिदम् ॥ २०४ ॥ 30
सम्पूर्णायां च तस्यां स प्राह पृच्छामि किंचन । तथा त्वामर्थये किञ्चित्तेन धारयसे[11] रुषम् ॥ २०५ ॥

---

1 A स्फाले । 2 A शुद्धेत मम; N B शुद्धे चेन्मम । 3 A मानसम् । 4 D N राजा मित्रं । 5 N A मन्यते ।
6 A D जनाश्रयः । * 'सर्प्पिर्दुष्टं तत् किमियता यत् प्रमेही न भुंक्ते ।' इति B आदर्शे पृष्ठपार्श्वभागे पाठभेदो लिखितो लभ्यते ।
7 N °मिमाम् । 8 A गूर्जराधीशः । 9 N °सूत्राणां । 10 N °माहूतवान् । 11 N किंच तेन धारय मे ।

पूर्वमेव कथारम्भे शिवः पात्रित्यमङ्गलम् । चतुःस्थानपरावर्तं तथा कुरु च[1] मद्गिरा ॥ २०६ ॥
धारासञ्ज्ञामयोध्यायां महाकालस्य नाम च । स्थाने शक्रावतारस्य शङ्करं वृषभस्य च ॥ २०७ ॥
श्रीमेघवाहनाख्यायां मम नाम कथा ततः । आनन्दसुन्दरा विश्वे जीयादाचन्द्रकालिकम् ॥ २०८ ॥
सुधीः प्राह महाराज ! न शुभं प्रत्युताशुभम् । परावर्ते कृतेऽमुष्मिन् सूनृतं मद्वचः शृणु ॥ २०९ ॥
5 पयःपात्रे यथा पूर्णे श्रोत्रियस्य करस्थिते । अपावित्र्यं भवेत् तत्र मद्यस्यैकेन बिन्दुना ॥ २१० ॥
एवमेषां विनिमये कृते पावित्र्यहानितः । 'कुलं मे ते[2] ध्रुवं राज्यं राष्ट्रं च क्षीयतेतराम् ॥ २११ ॥
शे षे से वाविशेषं ये न जानन्ति द्विजिह्वताम् । यान्तो हीनकुलाः किं ते न लज्जन्ते मनीषिणाम् ॥२१२॥
अथ राजा रुषा पूर्णः पुस्तकं तत्र्यधादसौ । अङ्गारशकटीवह्नौ जाड्यात् पूर्वं पुरस्कृते ॥ २१३ ॥
ततो रोषाद् बभाणासौ गाथामेकां नृपं प्रति । पुनर्नानेन वक्ष्यामीत्यभिसन्धिः कठोरगीः ॥ २१४ ॥
10 सा चेयम्–

**मालविओसि किमन्नं मन्नसि कव्वेण निव्वुइं[3] तंसि ।**
**धणवालं पि न मुंचसि पुच्छामि सवंचणं कत्तो ॥ २१५ ॥**

अथ वेश्म निजं गत्वा दौर्मनस्येन पूरितः । अवाङ्मुखः स सुष्वाप तदाऽनास्तृततल्पके ॥ २१६ ॥
न स्नानं देवपूजा न भुक्तेर्वार्तापि न स्मृता । वचनं नैव निद्रापि पण्डितस्य तदाऽभवत् ॥ २१७ ॥
15 मूर्त्तयेव सरस्वत्या नवहायनबालया । दुहित्रा मन्युहेतुं स पृष्टस्तथ्यं यथाह[4] तत् ॥ २१८ ॥
उत्तिष्ठ तात ! चेद्राज्ञा पुस्तकं पावके हुतम् । अक्षयं हृदयं मेऽस्ति सकलां ते ब्रुवे कथाम् ॥ २१९ ॥
स्नानं देवार्चनं भुक्तिं कुरु शीघ्रं यथा तव । कथापाठं[5] ददे हृष्टस्ततः सर्वं चकार सः ॥ २२० ॥
कथा च सकला तेन शुश्रुवेऽत्र[6] सुतामुखात् । कदाचिन्न श्रुतं यावत् तावन्नास्याः समाययौ ॥ २२१ ॥
सहस्रत्रितयं तस्याः कथाया अत्रुटत् तदा । अन्यत् सम्बन्धसम्बद्धं सर्वं न्यस्तं च पुस्तके ॥ २२२ ॥
20 अथापमानपूर्णोऽयमुच्चचाल ततः पुरः । मानाद्विनाकृताः सन्तः सन्तिष्ठन्ते न कर्हिचित् ॥ २२३ ॥
पश्चिमां दिशमाश्रित्य परिस्पन्दं विनाचलत् । प्राप सत्यपुरं नाम पुरं पौरजनोत्तरम् ॥ २२४ ॥
तत्र श्रीमन्महावीरचैत्ये नित्ये पदे इव । दृष्टे स परमानन्दमाससाद विदांवरः ॥ २२५ ॥
नमस्कृत्य स्तुतिं तत्र विरोधाभाससंस्कृताम् । चकार प्राकृतां 'देव निम्मले'त्यादि साऽस्ति च ॥ २२६ ॥
दिनैः कतिपयैर्भोजभूजानिस्तमजूहवत् । नास्तीति ज्ञातवृत्तान्तः किञ्चित्खेदवशोऽभवत् ॥ २२७ ॥
25 आह चेच्चिन्त्यते चित्ते कद्वदोऽस्मासु यात्वसौ । परस्तत्सदृशो नान्यस्तथ्यवाग् भारतीनिभः ॥ २२८ ॥
ईदृक्पुरुषसंसर्गे मन्दभाग्या वयं ननु । [7]वेशन्तस्य कथं हंसवासपुण्यं विजृंभते ॥ २२९ ॥
इत्यस्य खिद्यमानस्य चकोरस्य कुहूष्विव । प्रायाद् धर्माभिधः कौलो विद्वांस्तद्वृत्तमुच्यते ॥ २३० ॥
तद्यथा–

§ ७. आधारोऽनन्तगोत्राणां पुरुषोत्तमसंश्रयः । आकरोऽनेकरत्नानां लाटदेशोऽस्ति वार्द्धिवत् ॥ २३१ ॥
30 यत्र मेकलकन्योर्मिनिचयो दर्शनाज्जनम् । पवित्रयेत् तदस्ति श्रीभृगुकच्छाख्यया पुरम् ॥ २३२ ॥
तत्रास्ति वेदवेदाङ्गपारगो वाडवाग्रणीः । सूरदेव इति ख्यातो वेधा इव शरीरवान् ॥ २३३ ॥
सतीशिरोमणिस्तस्य कान्ता कान्तनयस्थितिः । सावित्रीत्याख्यया ख्यातिपात्रं दानेश्वरेषु या ॥ २३४ ॥
तयोरुभावभूतां च पित्राशानिलयौ सुतौ । धर्मः शर्मश्च दुहिता गोमतीत्यभिधा तथा ॥ २३५ ॥

---

1 N कुरुत सद्गिरा । 2 N A कुलमेते । 3 A निट्टुइं । 4 A तथाह । 5 N कथापीठं । 6 A शुश्रुवे च । 7 N B वेशं ।

धर्मः स्वनामतो वामः शठत्वादनयस्थितिः। पितुः सन्तापकृज्जज्ञे सूर्यस्येव शनैश्वरः॥ २३६॥
स पित्रोक्तो धनं वत्स! जीविकायै समर्जय। मुधा न लभ्यते धान्यं यत्ते[1] जठरपूरकम्॥ २३७॥
निष्कलत्वात् ततो नीचसंसर्गात् पाठवैरतः। सर्वोपायपरिभ्रष्टोऽभूदिक्षुक्षेत्ररक्षकः॥ २३८॥
तत्र श्रीक्षेत्रपालोऽस्ति न्यग्रोधाधः सदैवतः। तदर्चानिरतो धर्मः सदासीद् भक्तिबन्धुरः॥ २३९॥
स च स्वस्वामिनो गेहे गतः क्वचन पर्वणि। भुंक्ष्वात्रेति तदुक्तः सन् प्रोवाच प्रकटाक्षरम्॥ २४०॥ 5
न वल्भे क्षेत्रपालार्चां विनाऽहं प्रलयेऽपि हि। क्षेत्रं ययौ ततोऽभ्यर्च्य तमूर्ध्वो यावदास्थितः॥ २४१॥
तावदैक्षिष्ट नग्नां स योगिनीं तद्वृतेर्बहिः। क्षेत्रपालप्रसादेन शक्तिं मूर्तिमतीमिव॥ २४२॥
तया चेक्षुलतामेकां प्रार्थितेनातिभक्तिना। तद्युग्मं रससर्वस्वपूर्णं तस्याः समर्प्यत॥ २४३॥
तदास्वादप्रमोदेन सप्रसादाऽथ साऽवदत्। किं त्वं घृणायसे वत्स न वा सोऽप्यवदत् ततः॥ २४४॥
न घृणाये महामाये सा ततः पुनराह च। व्यादेहि वचनं तेन तच्चक्रे सादरं वचः॥ २४५॥ 10
सा च तद्रसगण्डूषं सुधावत्तन्मुखेऽक्षिपत्। हस्तं तन्मस्तके प्रादादायातस्य वृतेर्बहिः॥ २४६॥
तिरोधत्त क्षणेनैव सा देवी च गिरां ततः। विमुच्य स च तत्सर्वं तस्मान्निरगमद् द्रुतम्॥ २४७॥
शनैर्गच्छन् पुरः प्राप पूर्वगंगातटं ततः। अचिन्तितमवादीच्च काव्यं सारस्वतोदयात्॥ २४८॥

तथा हि–

एते मेकलकन्यकाप्रणयिनः पातालमूलस्पृशः 15
संत्रासं जनयन्ति विन्ध्यभिदुरा वारां प्रवाहाः पुरः।
हेलोद्वर्त्तितनर्तितप्रतिहतव्यावर्त्तितप्रेरित-
त्यक्तस्वीकृतनिह्नुतप्रकटितप्रोद्धूततीरद्रुमाः॥ २४९॥

तत उत्तीर्य नावासौ नगरान्तः समागमत्। निजावासं जनन्या च स्नेहादस्पर्शि हस्तयोः॥ २५०॥
अद्योत्सूरे कथं प्रागा इति पित्रोदितस्तथा। लसता सोऽनुजेनापि शिरसा हृदि पस्पृशे॥ २५१॥ 20
जामिर्गद्गदशब्दाच्च[2] भ्रातर्भ्रातः पुनःपुनः। सर्वानप्येवमन्यासौ[3] रूक्षाक्षरमथावदत्॥ २५२॥

मातर्मा स्पृश मा स्पृश त्वमपि मे मा तात तृप्तिं कृथाः
भ्रातः किं भजसे वृथा भगिनि किं निःकारणं रोदिषि।
निःशङ्कं मदिरां पिबन्ति नृपलं खादन्ति ये निर्दया-
श्चण्डालीमपि यान्ति निर्घृणतया ते हन्त कौला वयम्॥ २५३॥ 25

इत्युक्त्वा निर्ययौ गेहात् त्यक्त्वा स्वस्नेहमञ्जसा। अवन्तिदेशसारां स धारां प्राप पुरीं ततः॥२५४॥
स राजमन्दिरद्वारि पत्रालम्बं प्रदत्तवान्। काव्यान्यमूनि चालेखीत् तत्र मानाद्रिमूर्द्धगः॥ २५५॥

तद्यथा–

शम्भुर्गौडमहामहीपकटके धारानगर्यां द्विजो
विष्णुर्भट्टिअमंडले पशुपतिः श्रीकन्यकुब्जे जितः। 30
ये चान्येऽपि जडीकृताः कतिपये जल्पानिले वादिनः
सोऽयं द्वारि समागतः क्षितिपते! धर्मः स्वयं तिष्ठति॥ २५६॥

1 N तते। 2 N शब्दातं। 3 A B °वमान्यासौ।

यः कोऽपि पण्डितंमन्यः पृथिव्यां दर्शनेष्वपि । तर्क-लक्षण-साहित्योपनिषत्सु वदत्वसौ ॥ २५७ ॥
अथ श्रीभोजभूपालपुरः संगत्य पर्षदम् । तृणाय मन्यमानोऽसौ साहंकारां गिरं जगौ ॥ २५८ ॥

गलत्विदानिं चिरकालसञ्चितो[1] मनीषिणामप्रतिमल्लतामदः ।
उपस्थिता सेयमपूर्वरूपिणी तपोधनाकारधरा सरस्वती ॥ २५९ ॥

5 क्षितिप तव समक्षं बाहुरूर्ध्वीकृतो मे
वदतु वदतु वादी विद्यते यस्य शक्तिः ।
मयि वदति वितण्डावादजल्पप्रवीणे
जलधिवलयमध्ये नास्ति कश्चिद् विपश्चित् ॥ २६० ॥

हेमाद्रेर्बलवत्प्रमाणपटुता तार्क्ष्यस्य पक्षो दृढः
10 शैलानां प्रतिवादिता दिविषदां पात्रावलम्बग्रहः ।
देशस्यैव सरस्वतीविलसितं किंवा बहु ब्रूमहे
धर्मे सञ्चरति क्षितौ कविबुधख्यातिर्ग्रहाणां यदि ॥ २६१ ॥

बृहस्पतिस्तिष्ठतु मन्दबुद्धिः पुरंदरः किं कुरुते वराकः ।
मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ॥ २६२ ॥

15 आचार्योऽहं कविरहमहं वादिराट् पण्डितोऽहं
दैवज्ञोऽहं भिषगहमहं मान्त्रिकस्तान्त्रिकोऽहम् ।
राजन्नस्यां जलधिपरिखामेखलायामिलाया-
माज्ञासिद्धः किमिह बहुना सिद्धसारस्वतोऽहम् ॥ २६३ ॥

इत्याडम्बरकाव्यानि तस्य श्रुत्वा महाधियः । अर्वाग्दृशोऽभवन् सर्वे भूपालो व्यमृशत् ततः ॥ २६४ ॥
20 पुंसा तेन विना पर्षच्छून्येव प्रतिभासते । स कथं पुनरागन्ता य एवमपमानितः ॥ २६५ ॥
पुनः प्राप्यः कथंचित् स्यात् तदा प्रतिविधास्यते । एवं विचिन्त्य सर्वत्राप्रैषीद् विश्वास्यपूरुषान् ॥ २६६ ॥
शोधितः सर्वदेशेषु तेषामेके तमाप्नुवन् । **मरुमण्डल**मध्यस्थे पुरे **सत्यपुरा**भिधे ॥ २६७ ॥
तैश्च वैनयिकीभिः स वाणीभिस्तत्र सान्त्वितः । औदासीन्ये स्थितः प्राह नायास्ये तीर्थसेव्यहम् ॥२६८॥
तैर्विज्ञप्ते यथावृत्ते भूपः पुनरचीकथत् । ततो(?वो)दासीनताभासं वचोऽसावखरप्रियम् ॥ २६९ ॥
25 श्रीमुञ्जस्य महीभर्तुः प्रतिपन्नसुतो भवान् । ज्येष्ठोऽहं तु कनिष्ठोऽस्मि तत्किं गण्यं लघोर्वचः ॥ २७० ॥
पुरा ज्यायान्महाराजस्त्वामुत्सङ्गोपवेशितम् । प्राहेति बिरुदं तेऽस्तु श्री कू र्चा ल स र स्व ती ॥ २७१ ॥
त्यक्ता[2] वयं त्वया[3] वृद्धा राज्यमाप्ताश्च भाग्यतः । जये पराजये वाप्य**वन्तिदेशः**[4]स्थलं तव ॥ २७२ ॥
ततो मत्प्रियहेतोस्त्वमा गच्छागच्छ माऽथवा । जित्वा **धारां** त्वयं कौलः परदेशी प्रयास्यति ॥ २७३ ॥
तत्ते रूपं विरूपं वा जानासि स्वयमेव तत् । अतःपरं प्रवक्तुं न सांप्रतं नहि बुद्ध्यते ॥ २७४ ॥
30 प्राकृतोऽपि स्वयं ज्ञातं कुरुते नेतरत् पुनः । किं पुनस्त्वं महाविद्वांस्तद्[5] वाथारुचितं कुरु ॥ २७५ ॥
**धनपाल** इति श्रुत्वा स्वभूमेः पक्षपाततः । तरसाऽगात् ततो ज्ञात्वा राजाभिमुखमागमत् ॥ २७६ ॥
दृष्टे च पादचारेण भूपः संगम्य धीनिधिम् । दृष्टमाश्लिष्य चावादीत् क्षमस्वाविनयं मम ॥ २७७ ॥

---

1 N °सेवितो । 2 N त्यक्त्वा । 3 A D स्वयं । 4 A D °देशस्थलं । 5 B तद्यथा; N तद्यथा ।

**धनपाल**स्ततः साश्रुरवादीद् ब्राह्मणोऽप्यहम् । निःस्पृहो जैनलिङ्गश्चावश्यं तद्व्रतसस्पृहः ॥ २७८ ॥
मयि मोहो महाराज विलम्बयति मामिह । भवेन्मानापमानोऽपि[1] नह्युदासीनचेतसि ॥ २७९ ॥
अथ राजाह मे खेदो नाणुरप्यस्त्यसौ तव । त्वयि जीवति **भोज**स्य सभा यत् परिभूयते ॥ २८० ॥
पराभवस्तवैवायमितिश्रुत्वा कृतिप्रभुः । प्राह मा खिद्यतां भिक्षुरक्लेशाज्जेष्यते प्रगे ॥ २८१ ॥
श्रुत्वेति हृदये तुष्टो ययौ श्री**भोज**भूपतिः । विद्वानपि निजं वेश्म[2] चिरत्यक्तं पुनर्ययौ ॥ २८२ ॥ 5
संमार्जनातिगे गेहे शशकाखुकृतैर्बिलैः । दृश्यनिःसंख्यवल्मीकदुर्गमे प्राविशत् ततः ॥ २८३ ॥
राजा सौधे गतः प्रातः पृष्टो भूपेन वेश्मनः । शुद्धिं विद्वत्प्रभुः प्राह श्रूयतां सूनृतं वचः ॥ २८४ ॥

तथेदम्–

**पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।**
**विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ २८५ ॥** 10

राज्ञा **धर्म्म**स्तदाहूत आस्थाने स्वःसभोपमे । श्रूयतां **धनपालो**ऽयमाययौ वादिदर्पहृत् ॥ २८६ ॥
**धर्मो**ऽथ **छित्तपं** विज्ञं पूर्वं परिचितं तदा । दृष्ट्वा काव्यमदोऽवादीत् तदावर्जनगर्भितम् ॥ २८७ ॥

**श्रीछित्तपे कर्दमराजशिष्ये सभ्ये सभाभर्तरि भोजराजे ।**
**सारस्वते स्रोतसि मे प्लवन्तां पलालकल्पा धनपालवाचः ॥ २८८ ॥**

**धनपे**ति नृपस्यामंत्रणे मे मम तद्गिरः । आलवाचः प्लवन्तां हि सिद्धसारस्वते क्षरे[3] ॥ २८९ ॥ 15
इति भूपालमित्रेण शब्दखण्डनयाऽनया[4] । अस्यैव प्रतिपक्षार्थोऽक्षरैस्तैरेव जल्पितः ॥ २९० ॥
समस्यामर्पयामास सिद्धसारस्वतः कविः । **धर्म**स्तां च पुपूरेऽसौ वारानष्टोत्तरं शतम् ॥ २९१ ॥
तासामेकाऽपि निर्दोषा न विद्वच्चित्तहारिणी । पुपूरे चान्त्यवेलायामित्थं तेन मनीषिणा ॥ २९२ ॥

**'इयं व्योमाम्भोधेस्तटमिव जवात् प्राप्य तपनं**
**निशानौर्विश्लिष्टा घनघटितकाष्ठा विघटते'** ॥–इति समस्या । 20
**'वणिक्चक्रा[5]क्रन्दत्विषि शकुनिकोलाहलगणे**
**निराधारास्तारास्तदनु च निमज्जन्ति मणयः'** ॥ २९३ ॥

अतिश्रुतिकटुत्वेन चन्द्रास्तवर्णनेन च । न्यूनोक्तिदूषणाच्चापि [6]सभ्यैर्नैवापि मानिता ॥ २९४ ॥
ततो वक्त्रं समस्यायाः पतितिविति च सोऽवदत् । विलक्षो जयभग्नाशः स मिथ्याडम्बरी कविः ॥ २९५ ॥
ततः श्री**धनपाले**नापूरि विद्वन्मनोहरा । अनायासात् समस्येयं यतोऽस्यैतत् कियत् किल ॥ २९६ ॥ 25

**'असावप्यामूलत्रुटितकरसन्तानतनिकः**
**प्रयात्यस्तं '[7]स्रस्तसितपट इव श्वेतकिरणः'** ॥ २९७ ॥

भग्नो मग्नः पराभूतिवारिधौ बोधतस्ततः[8] । तरण्डाद्धर्म्म उद्दध्रे कवीन्द्रेणेति गाथया ॥ २९८ ॥

**आसंसारं कइपुंगवेहिं पइदियह गहियसारोवि ।**
**अज्जवि अभिन्नमुद्दो व्व जयइ वायापरिप्फंदो ॥ २९९ ॥** 30

ततः श्री**भोजराजो**ऽपि कृतीशानुमतस्तदा । यच्छन् **धर्म्म**स्य वित्तस्य लक्षं तेनेत्यवार्यत[9] ॥ ३०० ॥

---

1 N हि । 2 वेषं त्यक्त्वा । 3 A क्षरे; B मरे । 4 N तया । 5 N वणिग्वक्त्राक्रंद° । 6 N साम्यैर्नैषा° । 7 D स्रस्तः । 8 N बोधित° । 9 N °वायत ।

तद्यथा—

**ब्रह्माण्डोदरकोटरं कियदिदं तत्रापि भूम्नोलकं**
**पृथ्वीमण्डलसञ्ज्ञकं कुपतयस्तत्राप्यमी कोटिशः ।**
**तत्रैके गुरुगर्वगद्गदगिरो विश्राणयन्त्यर्थिनां**
**हा हा हन्त वयं तु वज्रकठिनास्तानेव याचेमहि ॥ ३०१ ॥**

न ग्रहीष्ये ततो वित्तमसारकमशाश्वतम् । अभिमाने हृते जीवे पुरुषः शवसन्निभः ॥ ३०२ ॥
स [1]आह कविरेकोऽसि[2] धनपाल[3] धियांनिधे[4] ! । इति प्रतीतं मच्चित्ते बुधो नास्ति तु निश्चितम् ॥ ३०३ ॥
सविस्मयं ततः प्राह सिद्धसारस्वतः कविः । नास्तीति नोच्यते विद्वन् ! रत्नगर्भा वसुन्धरा ॥ ३०४ ॥
**अणहिल्लपुरे** श्रीमान् **शान्तिसूरिः** कृतिप्रभुः । जैनः ख्यातस्त्रिभुवने बुधस्तमवलोकय ॥ ३०५ ॥
स्नेहाद् विसर्जितो राज्ञा [5]कवीशेनाप्यसौ ततः । विजये तस्य भग्नाशो व्यमृशन्मानसान्तरा ॥ ३०६ ॥
अद्य पूर्वं न केनापि स्खलितं वचनं मम । ईदृग्मम वचो हन्ता साक्षाद् ब्राह्मी नतु द्विजः ॥ ३०७ ॥
प्रयाणं सुन्दरं तस्माद् बुधालोकमिषादतः । ध्यात्वेति **गूर्जरं** देशं प्रति प्रस्थानमातनोत् ॥ ३०८ ॥
प्रातः संसदि भूपालस्तमाह्वत्त विशारदम् । नास्तीति च परिज्ञाते **धनपालः** कविर्जगौ ॥ ३०९ ॥
'धर्मो जयति नाधर्म्म' इत्यलीकीकृतं वचः । इदं तु सत्यतां नीतं 'धर्मस्य त्वरिता गतिः' ३१० ॥
राजा प्राह यथा जीवं विनाङ्गेऽवयवान्विते । सत्यपि स्यान्न सामर्थ्यमुत्तरेऽपि परागतौ[6] ॥ ३११ ॥
तद्वदेकं विना मित्रं **धनपालं** कृतिप्रभुम् । मूकेव[7] **धर्म्म**संवादे सभा शोभा[8] विनाकृता ॥ ३१२ ॥
तस्मात्स एव मत्पार्श्वं शृङ्गारयतु सर्वदा । श्रुत्वेति धनपालोऽपि तुष्टः सन्मानतः प्रभोः ॥ ३१३ ॥
यथा स **पत्तनं** प्राप्तो जितः श्री**शान्तिसूरि**भिः । बुध्वाऽऽस्ते मानितास्तेन तज्ज्ञेयं तच्चरित्रतः ॥३१४॥

§८. इतश्च **शोभनो** विद्वान् सर्वग्रन्थमहोदधिः । यमकान्वितततीर्थेशस्तुतीश्च[9]केऽतिभक्तितः ॥ ३१५ ॥
तदेकध्यानतः श्राद्धगृहे त्रिर्भिक्षया ययौ । पृष्टः श्राविकया किं त्वं त्रिरागा[10] हेतुरत्र कः ॥ ३१६ ॥
स प्राह चित्तव्याक्षेपान्न जाने स्वगतागते । श्राविकाऽऽस्यात् परिज्ञाते गुरुभिः पृष्ट एव तत् ॥ ३१७ ॥
स प्राह न स्तुतिध्यानाज्जानेऽपश्यदथो[11] गुरुः । तत्काव्यान्यति[12]हर्षेण प्राशंसत्तं चमत्कृतः ॥ ३१८ ॥
तदीयदृष्टिसङ्गेन तत्क्षणं **शोभनो** ज्वरात् । आससाद परं लोकं सङ्घस्याभाग्यतः कृती ॥ ३१९ ॥
तासां जिनस्तुतीनां च सिद्धसारस्वतः कविः । टीकां चकार सौदर्यस्नेहं चित्ते वहन् दृढम् ॥ ३२० ॥
आयुरन्तं परिज्ञाय कोविदेशोऽन्यदा नृपम् । आपृच्छत परं लोकं साधितुं गुरुसंनिधौ ॥ ३२१ ॥
श्रीमन्**महेन्द्र**सूरीणां पादाम्भोजपुरस्सरम् । तनुं समलिखद् गेहिधर्म एव स्थितः सदा ॥ ३२२ ॥
उग्रेण तपसा शुद्धदेहः क्षिप्तान्तर्रद्विषन् । सम्यक्त्वं निरतीचारं पालयन्नालये गुरोः ॥ ३२३ ॥
तिष्ठन्निर्याप्यमानः स[13] स्थविरैः श्रुतपारगैः । अन्ते देहं परित्यज्य श्रीसौधर्म्ममशिश्रयत्[14] ॥३२४॥—युग्मम् ।
गुरवोऽपि तदा तस्य दृष्ट्वा छेकत्वमद्भुतम् । लोकद्वयेऽपि सन्यासपूर्वं तेऽपि दिवं ययौ ॥ ३२५ ॥

ॐ

---

1 A स चाह° । 2 N °रेकोऽपि । 3 N धनपालः । 4 N धियांनिधिः । 5 N वादीशे° । 6 N परागतैः । 7 N मूके च । 8 N शोभाविना । 9 N स्तुति च° । 10 N किं तु विरागे । 11 N °दहो । 12 N °न्यथ हर्षेण । 13 N °मानस स्थ° । 14 A D °शिश्रियत् ।

श्रीमन्महेन्द्रगुरुदीक्षितशोभनस्य
प्रज्ञाधनस्य धनपालकवेश्च वृत्तम् ।
श्रीजैनधर्म्मदृढवासनया लभन्तां
भव्यास्तमस्ततिहरं ननु बोधिरत्नम् ॥ ३२६ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ वृत्तं महेन्द्रप्रभोः
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो मुनीन्दुप्रभः ॥ ३२७ ॥

श्रीदेवानन्दसूरिर्दिशतु मुदमसौ लक्षणाद्येन हैमा-
दुद्धृत्य प्राज्ञहेतोर्विहितमभिनवं सिद्धसारस्वताख्यम् ।
शाब्दं शास्त्रं यदीयान्वयिकनकगिरिस्थानकल्पद्रुमश्च
श्रीमान् प्रद्युम्नसूरिर्विशदयति गिरं नः पदार्थप्रदाता ॥ ३२८ ॥

## ॥ इति श्रीमहेन्द्रप्रभसूरिप्रबन्धः ॥

॥ ग्रं० ३६१, अ० २६ । उभयं ४००८, अ० ५ ॥

---

# १८. श्रीसूराचार्यचरितम् ।

**सूराचार्यः** श्रिये श्रीमान् सुमनःसङ्घपूजितः । यत्प्रज्ञया सुराचार्यो मात्राधिकतया जितः ॥ १ ॥
**सूराचार्य**प्रभोरत्र ब्रूमः किं गुणगौरवम् । येन श्री**भोजराज**स्य सभा प्रतिभया जिता ॥ २ ॥
चरित्रं चित्रवत्तस्य[1] सुधीहृद्भित्तिषु स्थितम् । ज्ञात्वा वर्णोज्ज्वलं व्याख्यायते स्थैर्याय चेतसः ॥ ३ ॥
5 §१. **अणहिल्लपुरं** नाम **गूर्जरा**वनिमण्डनम्[2] । अस्ति प्रशस्तिवत् पूर्वभूपालनयपद्धतेः ॥ ४ ॥
प्रतापाक्रान्तराजन्यचक्र[3]श्चक्रेश्वरोपमः । श्री**भीम**भूपतिस्तत्राभवद् दुःशासनार्दनः ॥ ५ ॥
शास्त्रशिक्षागुरुर्**द्रोणाचार्यः** सत्याक्षतव्रतः । अस्ति क्षात्रकुलोत्पन्नो नरेन्द्रस्यास्य मातुलः ॥ ६ ॥
तस्य **संग्रामसिंहा**ख्यभ्रातुः पुत्रो महामतिः[4] । **महीपाल** इति ख्यातः प्रज्ञाविजितवाक्पतिः ॥ ७ ॥
तत्ताते ऽस्तंगते दैवाद् बाल्य एव प्रभोः पुरः । तन्माता भ्रातृपुत्रं स्वं प्रशाधीति प्रभुं जगौ ॥ ८ ॥
10 निमित्तातिशयाज्ज्ञात्वा तं शासनविभूषकम् । आदराज्जगृहुर्भ्रातृजायां सन्तोष्यवाग्भरैः ॥ ९ ॥
शब्दशास्त्रप्रमाणानि साहित्यागमसंहिताः । अमिलन् स्वयमेवास्य साक्षिमात्रे गुरौ स्थिते ॥ १० ॥
स्नेहादेव गुरोः पार्श्वममुञ्चन् जगृहे व्रतम् । स्वपट्टे स्थापयेन्मंक्षु तादृशा नोचितातिगाः ॥ ११ ॥
वार्त्तमानिकशास्त्राम्भोरुहभासुर[5]भानुमान् । जनाज्ञानतमश्छेदी **सूराचार्यः** स विश्रुतः ॥ १२ ॥
§२. अथ श्री**भोजराज**स्य वाग्देवीकुलसद्मनः । कलासिन्धुमहासिन्धोर्विद्वल्लीलामहौकसः ॥ १३ ॥
15 प्रधाना आजग्मिवांसः[6] श्री**भीम**नृपपर्षदम् । गाथामेकामजल्पंश्च निजनाथगुणाद्भुताम्* ॥ १४ ॥–युग्मम् ।

तथा हि–

**हेलानिद्दलियगइंदकुंभपयडियपयावपसरस्स ।**
**सीहस्स मएण समं न विग्गहो नेय संधाणं ॥ १५ ॥**

हेलया तदवज्ञाय तेषां सन्मानमादधे । आवास-भुक्तिवृत्त्याद्यैर्भूपस्थानं च ते ययुः ॥ १६ ॥
20 गतेषु तेषु भूपालः स्वप्रधानानिहादिशत् । शोध्यः प्रत्युत्तरार्थाय विपश्चित् कश्चिदद्भुतः ॥ १७ ॥
स्वस्वमत्यनुमानेन प्रत्यार्याः कविभिः कृताः । न चमत्कारिणी राज्ञस्तासामेकाऽपि चाभवत् ॥ १८ ॥
सर्वदर्शनिशालासु चतुष्के चत्वरे त्रिके । हर्म्यचैत्येषु गच्छन्ति ते तत्[7] प्रेक्षाकुतूहलात् ॥ १९ ॥
श्रीमद्**गोविन्दसूरी**णां चैत्ये ते चान्यदा ययुः । तदा पर्वणि कुत्रापि तत्रासीत् प्रेक्षणक्षणः ॥ २० ॥
अङ्गहारप्रकारैश्च त्रिपताकादिहस्तकैः । तत्र नर्नर्ति लास्येन ताण्डवेन च नर्तकी ॥ २१ ॥
25 आतोद्यतालसंवादसपत्न[8]विषमासनैः । श्रान्ता श्लक्ष्णोपलस्तम्भं स्पर्शे म्रक्षणवन्मृदुम् ॥ २२ ॥
आशिश्लेष नटी खेदहृतये पवनार्थिनी । तत्काठिन्यप्रकर्षस्य द्रावणायेव निर्भरम् ॥ २३ ॥–युग्मम् ।
व्यजिज्ञपन् विशिष्टाश्च श्री**गोविन्दा**य सूरये । इमामीदृगवस्थानां वर्णयध्वं[9] प्रभो ! स्फुटम् ॥ २४ ॥
**सूराचार्यं** च तत्रस्थं तदुत्कीर्तनहेतवे । तं तदा दिदिशुः पूज्यास्तत्क्षणाच्चाथ सोऽब्रवीत् ॥ २५ ॥

तद्यथा–

30 **यत् कङ्कणाभरणकोमलबाहुवल्लिसङ्गात् कुरङ्गकदृशो नवयौवनायाः ।**
**न खिद्यसि प्रचलसि प्रविकम्पसे त्वं तत् सत्यमेव दृषदा ननु निर्मितोऽसि ॥ २६ ॥**

---

1 N चित्रकृत्तस्य । 2 N D मण्डलम् । 3 N चक्रं । 4 N महीपतिः । 5 N B °रुहाभासनभानु° । 6 A D आजगत्मांस । * 'धराजानिजनाद्भुताम्' इति A D । 7 N ततः । 8 N °सम्पन्न° । 9 A वर्णय त्वं ।

तथा हि–

**हेमसूरि अत्थाणि ते ईसर जे पंडिया ।**
**लच्छि-वाणि मुहकाणि सा पइं भागी मुह मरउं ॥ ११९ ॥**

तारमुक्तेऽस्य[1] पूर्वार्द्धे नाम्ना पूज्यप्रजल्पनात् । अवज्ञाकृतिनोऽभूवन् सभ्यानां कोपतो दृशः ॥ १२० ॥
माञ्जिष्ठाः सावधानेषु तेषु तस्य पदत्रयम् । उवाच चारणस्तच्च श्रुत्वा ते पुलकं दधुः ॥ १२१ ॥–युग्मम् । 5
अचिन्तयंश्च वाण्यस्य चमत्कारकृदुन्नता । बुधस्य हि स्थितिर्यत्र तत्र स्यान्महिमा गुरुः[2] ॥ १२२ ॥
ऊचुर्मुदा ते सम्भूय पुनः पठ पुनः पठ । पठिते प्रभवोऽवोचन्निःक्षोभस्त्रिः[3] पुनः पठ ॥ १२३ ॥
चतुःकृत्वोऽपि पाठे तु मते कृतिभिरादरात् । कोपाभासमिवाबिभ्रद् विचाराच्चारणोऽवदत् ॥ १२४ ॥
यूयं यथेष्टदातारो यदि तत्स्वानुमानतः । गृह्णाम्यहं गुरुं भारं वाहीक इव दुर्वहम् ॥ १२५ ॥
त्रिःपाठे दोहकस्यास्य यल्लब्धं तेन मे धृतिः । नैवाधिकेन कार्यं मे[4] प्रत्युताहितहृद्रुजा ॥ १२६ ॥ 10
तस्यायुतत्रयं पूज्याः सभ्यपार्श्वाददापयन् । स ऊचे मे धनं पूर्णमासप्तपुरुषावधि ॥ १२७ ॥
अहं प्रतिग्रहं गृह्णे [5]न चातोऽभ्यधिकं किल । इत्युक्त्वा प्रययौ सोऽथ प्रदेशं स्वसमीहितम् ॥ १२८ ॥

§७. राज्ञा श्री**सिद्धराजे**नान्यदाऽनुयुयुजे प्रभुः । भवतां कोऽस्ति पट्टस्य योग्यः शिष्यो गुणाधिकः ॥१२९॥
तमस्माकं दर्शयत चित्तोत्कर्षाय मामिव । अपुत्रमनुकम्पार्हं पूर्वे त्वां मा स्म शोचयन् ॥ १३० ॥
आह श्री**हेमचन्द्र**श्च न कोऽप्येवं हि चिन्तकः । आद्योऽप्यभूदिलापालः सत्पात्राम्भोधिचन्द्रमाः ॥१३१॥ 15
सज्ज्ञानमहिमस्थैर्यं मुनीनां किं न जायते । कल्पद्रुमसमे राज्ञि त्वयीदृशि कृतस्थितौ ॥ १३२ ॥
अस्त्यामुष्यायणो **रामचन्द्रा**ख्यः कृतिशेखरः । प्राप्तरेखः प्राप्तरूपः संघे विश्वकलानिधिः ॥ १३३ ॥
अन्यदाऽदर्शयंस्तेऽमुं क्षितिपस्य स्तुतिं च सः । अनुक्तामाद्यविद्वद्भिर्हृल्लेखाधायिनीं व्यधात् ॥ १३४ ॥

तथा हि–

**मात्रयाऽप्यधिकं किंचिन्न[6] सहन्ते जिगीषवः ।** 20
**इतीव त्वं धरानाथ ! धारानाथमपाकृथाः ॥ १३५ ॥**

शिरोधूननपूर्वं च भूपालोऽत्र दृशं दधौ । **रामे** वामेतराचारो विदुषां महिमस्पृशाम् ॥ १३६ ॥
'एकदृष्टिर्भवान् भूयाद् वत्स ! जैनेन्द्रशासने । महापुण्योऽयमाचार्यो यस्य त्वं पदरक्षकः[8] ॥ १३७ ॥
इत्युक्त्वा विरते राज्ञि रामस्यादुष्यदेककम्[9] । नेत्रं दृष्टिर्हि दुर्मृष्या सुकृतातिशयस्पृशाम् ॥ १३८ ॥
उपाश्रयाश्रितस्यास्य महापीडापुरःसरम् । व्यनशद् दक्षिणं चक्षुर्न रत्नमनुपद्रवम् ॥ १३९ ॥ 25
कर्मप्रामाण्यमालोच्य ते शीतीभूतचेतसः । स्थितास्तत्र चतुर्मासीमासीनास्तपसि स्थिरे ॥ १४० ॥

§८. चतुर्मुखाख्यजैनेन्द्रालये व्याख्यानमद्भुतम् । श्रीनेमिचरितस्वामी श्रीसङ्घाग्रे प्रतुष्टुवुः ॥ १४१ ॥
सुधासारवचःस्तोमाकृष्टमानसवासनाः । शुश्रूषवः समायान्ति तत्र दर्शनिनोऽखिलाः ॥ १४२ ॥
पाण्डवानां परिव्रज्याव्याख्याने विहितेऽन्यदा । ब्राह्मणा मत्सराध्माता व्याचख्युर्नृपतेरिदम् ॥ १४३ ॥
स्वामिन् ! पुरा महाव्यासः कृष्णद्वैपायनोऽवदत् । वृत्तं युधिष्ठिरादीनां भविष्यज्ज्ञानतोऽद्भुतम् ॥ १४४ ॥ 30
तत्रेदमुच्यते स्वायुःप्रान्ते पाण्डोः सुता अमी । हिमानीमहिते जग्मुर्हिमवद्भूधराध्वनि ॥ १४५ ॥
श्री**केदार**स्थितं शम्भुं स्नानपूजनपूर्वकम् । आराध्य परमाभक्तिस्वान्ताः[10] स्वान्तमसाधयन् ॥–युग्मम् ।

---

1 B तारमुक्तेच; N पूर्वार्द्धे । 2 N गुरोः । 3 D निःक्षोभः पुनस्त्रिः पठ । 4 A नः । 5 N न वातोऽ° । 6 D कंचिन्न । 7 A B D एकादृष्टि° । 8 A D पुण्यरक्षकः । 9 N रामस्यादुपदेशकम् । 10 N परया भक्त्या स्वान्ताः ।

अमी श्वेताम्बराः शूद्रा विद्रुतस्मृतिसूक्तयः । तदुक्तवैपरीत्यानि जल्पन्ति निजपर्षदि ॥ १४७ ॥
अनौचित्यकृताचारात् पुरे तेऽरिष्टमित्यदः । भूभृता रक्षणीयाश्च दुराचाराः प्रजाकृताः ॥ १४८ ॥
विचार्य हृदि कार्याणि विचारक ! विधेहि तत् । इत्युक्त्वा विररामासौ द्विजव्यूहोऽतिधीरगीः ॥ १४९ ॥
राजाप्याह न भूपाला अविमृश्य विधायिनः । दर्शनानां तिरस्कारमविचार्य[1] न कुर्वते ॥ १५० ॥
5 अनुयोज्या अमी चात्र दद्युश्चेत् सत्यमुत्तरम् । तन्मे गौरविता एव न्याय एवात्र नः सुहृत् ॥ १५१ ॥
हेमाचार्योऽपि निर्ग्रन्थः सङ्गत्यागी महामुनिः । असूनृतं कथं ब्रूयाद् विचार्यं तदिदं बहु ॥ १५२ ॥
एवं भवत्विति प्रोचुः प्रवीणा ब्राह्मणा अपि । आजुहाव ततो राजा हेमचन्द्रं मुनीश्वरम् ॥ १५३ ॥
अपृच्छदथ माध्यस्थ्यात सर्वसाधारणो नृपः । शास्त्रे चार्हती दीक्षा किं[2] गृहीता पाण्डवैः किमु ॥१५४॥
सूरिरप्याह शास्त्रे न इत्यूचे पूर्वसूरिभिः । हेमाद्रिगमनं तेषां महाभारत मध्यतः ॥ १५५ ॥
10 परमेतन्न जानीमो ये न (नः ?) शास्त्रेषु वर्णिताः । त एव व्यासशास्त्रेऽपि कीर्त्यन्तेऽथ परेऽपरे ॥१५६॥
राजाह तेऽपि बहवः पूर्वं जाताः कथं मुने ! । अथावोचद् गुरुस्तत्र श्रूयतामुत्तरं नृप ! ॥ १५७ ॥
व्याससन्दर्भिताख्याने श्रीगांगेयः पितामहः । युद्धप्रवेशकालेऽसावुवाच स्वं परिच्छदम् ॥ १५८ ॥
मम प्राणपरित्यागे तत्र संस्क्रियतां तनुः । न यत्र कोऽपि दग्धः प्राग् भूमिखण्डे सदा शुचौ ॥ १५९ ॥
विधाय न्याय्यसङ्ग्रामं मुक्तप्राणे पितामहे । विमृश्य तद्वचस्तेऽङ्गमुत्पाट्यास्य ययुर्गिरौ ॥ १६० ॥
15 अमानुषप्रचारे च शृङ्गे कुत्रापि चोन्नते । अमुञ्चन् देवतावाणी कापि तत्रोदयौ तदा ॥ १६१ ॥

तथा हि–

अत्र भीष्मशतं दग्धं पाण्डवानां शतत्रयम् ।
द्रोणाचार्य्यसहस्रं तु कर्णसंख्या न विद्यते ॥ १६२ ॥

एतद् वयमिहाकर्ण्य [3]व्यमृशाम स्वचेतसि । बहूनां मध्यतः केऽपि चेद् भवेयुर्जिनाश्रिताः ॥ १६३ ॥
20 गिरौ शत्रुञ्जये तेषां प्रत्यक्षाः सन्ति मूर्तयः । श्रीनासिक्यपुरे सन्ति श्रीमच्चन्द्रप्रभालये ॥ १६४ ॥
केदारे च महातीर्थे कोऽपि कुत्रापि तद्व्रतः । बहूनां मध्यतो धर्म्मं तत्र ज्ञातं न [4]नः स्फुटम् ॥ १६५ ॥
स्मार्त्ता अप्यनुयुज्यन्तां वेदविद्याविशारदाः । ज्ञानं कुत्रापि चेद् गङ्गा नहि कस्यापि पैतृकी ॥ १६६ ॥
राजा श्रुत्वाह तत्सत्यं वक्ति जैनर्षिरेप यत् । अत्र ब्रूतोत्तरं तथ्यं यद्यस्ति भवतां मते ॥ १६७ ॥
अत्र कार्य्ये हि युष्माभिरेकं तथ्यं वचो ननु । अजल्पि यद्विचार्य्यैव कार्य्यं कार्य्यं क्षमाभृता ॥ १६८ ॥
25 तथाहमेव कार्य्येऽत्र दृष्टान्तः समदर्शनः । समस्तदेवप्रासादसमूहस्य विधापनात् ॥ १६९ ॥
उत्तरानुदयात् तत्र मौनमाशिश्रियंस्तदा । स्वभावो जगतो नैव हेतुः कश्चिन्निरर्थकः ॥ १७० ॥
राज्ञा सत्कृत्य सूरिश्चाभाष्यत स्वागमोदितम् । व्याख्यानं कुर्वतां सम्यग् दूषणं नास्ति वोऽण्वपि ॥१७१॥
भूपेन सत्कृतश्चैवं हेमचन्द्रप्रभुस्तदा । श्रीजैनशासनव्योम्नि प्रचकाशे गभस्तिवत् ॥ १७२ ॥
§९. राज्ञः सौवस्तिकोऽन्येद्युरामिगाख्यो वृथा रुषम् । वहन् जजल्प सूरिं तं निविष्टं राजपर्षदि ॥१७३॥
30 धर्मे वः शमकारुण्यशोभिते न्यूनमेककम् । व्याख्याने कृतशृङ्गारास्त्रिय [5]आयान्ति सर्वदा ॥ १७४ ॥
भवन्निमित्तमकृतं प्रासुकं ददते च ताः । विकारसारमाहारं तद्ब्रह्म क स्थितं हि वः ॥ १७५ ॥

यतः–

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।

1 A °मविचार्येह; D °मविचार्येण । 2 N नास्ति 'किं' । 3 N विमृशाम । 4 N ततः । 5 D स्त्रियश्चायांति ।

आहारं सुदृढं पुनर्बलकरं[1] ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद् विन्ध्यः प्लवेत् सागरे ॥ १७६ ॥

अथ सूरिरुवाचात्र नेदं विद्वज्जनोचितम् । अविमर्श[2]पुरस्कारं वचः शुचि पुरोहित ! ॥ १७७ ॥
यतो विचित्रा विश्वेऽस्मिन् प्राणिनां चित्तवृत्तयः । पशूनामपि चैतन्यवतां नृणां तु किं पुनः ॥ १७८ ॥

यतः– 5

सिंहो बली [3]हरिणशूकरमांसभोजी
सम्वत्सरेण रतिमेति किलैकवारम् ।
पारापतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद[4] कोऽत्र हेतुः ॥ १७९ ॥

श्रुत्वेति भूपतिः प्राहातिसाहसमिदं नृणाम् । य उत्तराय नालं स्यात् स यद्वदति पर्षदि ॥ १८० ॥ 10
इति भूपालसन्मान्यो वदान्यः सुकृतार्थिनाम् । श्री**हेमसूरिः** सञ्जज्ञे सङ्घोद्धारधुरन्धरः ॥ १८१ ॥

§ १०. अथान्यदा महाविद्वान् श्री भा ग व त दर्शनी । **देवबोधा**ख्यया[5] सांक्रामिकसारस्वतोत्तरः ॥ १८२ ॥
आजगाम धियां धाम**णहिल्लपुर**मध्यतः । व्यजिज्ञपन्नियुक्ताश्च श्री**सिद्धा**धिपतेः पुरः ॥ १८३ ॥
ततः **श्रीपाल**मामन्त्र्य कविराजं नराधिपः । रहो मन्त्रयते स्मासौ प्रतिपन्नं सहोदरम् ॥ १८४ ॥
**देवबोधो** महाविद्वान् द्रष्टव्योऽसौ कथं हि नः । निस्पृहत्वादनागच्छन् सभायां तपसोर्जितः ॥ १८५ ॥ 15
आत्मदेशे परो विद्वानागतो यन्न पूज्यते । तत् क्षूणमात्मनः केन निवार्यमपकीर्तिकृत् ॥ १८६ ॥
अथाह कविराजोऽपि विद्वानाडम्बरी च यः । स कथं निस्पृहो लक्ष्मीं विना परिकरः कथम् ॥ १८७ ॥
सा विद्वद्भिर्युष्मादृशैर्भूपैर्भवेदिह । दत्तैव नापरः कश्चिदुपायोऽस्याः समर्जने ॥ १८८ ॥
परं श्रीभारतीभक्त्यात्यादरः स्वामिनो यदि । तत् सुधर्म्मासधर्म्मायां पर्षद्याहूयतामसौ ॥ १८९ ॥
अस्त्वेवमिति राज्ञोक्ते प्रधानपुरुषास्ततः । प्राहीयन्त ततस्तेनाभिहितास्ते मदोद्धतम् ॥ १९० ॥ 20
आह्वानायागता यूयं मम भूपनिदेशतः । भूपालैः किं हि नः कार्य्यं स्पृहाविरहितात्मनाम् ॥ १९१ ॥
तथा **काशीश्वरं कन्यकुब्जा**धीशं समीक्ष्य च । गणयामः कथं स्वल्पदेशं श्री**गूर्जरे**श्वरम् ॥ १९२ ॥
परमस्मद्दिदृक्षायै भवतां स्वामिनस्तदा । उपविष्टः क्षितौ सिंहासनस्थं मां स पश्यतु ॥ १९३ ॥
एवं विसर्जितास्ते च यथावृत्तं व्यजिज्ञपन् । कविराजं नृपः प्राह तद्वाचातिचमत्कृतः ॥ १९४ ॥
विना जैनमुनीन् शान्तान् को न नामावलिप्तधीः । तारतम्याश्रिते ज्ञाने कोऽवकाशो मदस्य तत् ॥१९५॥ 25
द्रष्टव्यमिदमप्यस्य चेष्टितं कौतुकात् ततः । स**श्रीपाल**स्ततो भूपोऽन्यदागच्छत् तदालये ॥ १९६ ॥
सिंहासनस्थमद्राक्षीद् विद्वद्वृन्दनिषेवितम् । मृगेन्द्रमिव दुर्धर्षं **देवबोधं** कवीश्वरम् ॥ १९७ ॥
दृढभक्त्या नमश्चक्रे राजा विनयवामनः । गुणपूर्णे सतां चित्ते नावकाशो मदस्य यत् ॥ १९८ ॥
प्रत्यक्षविश्वरूपं तं विश्वरूपवराशिषा । अभिनन्द्यावदत् पाणिसञ्ज्ञयाऽदर्शयन् भुवम् ॥ १९९ ॥
अत्रोपविश्यतां राजन् ! श्रुत्वेति क्ष्मापतिस्ततः । श्री**श्रीपाल**कृतं काव्यमुवाच प्रकटाक्षरम् ॥ २०० ॥ 30

यतः–

इह निवसति[6] मेरुः शेखरो भूधराणा-
मिह विनिहितभाराः सागराः सप्त चान्ये ।

---

1 B N पयोदधियुतं । 2 N अविमृश्य; B अविमृश्यं । 3 D शशकशूकर° । 4 N वत । 5 N °बोधाख्ययासीः ।
6 N इह हि वसति ।

इदं[1]महिपतिदम्भस्तम्भसंरम्भधीरं
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥ २०१ ॥
इत्युक्त्वा[2]ऽथ प्रतीहार[3]पटास्तृतधरातले । उपाविशद् विशां नाथः प्रमाथो दोषविद्विषाम् ॥ २०२ ॥
पर्षदोऽनुचितः कोऽयमिति हस्तेन दर्शिते । कविराजे नृपोऽवादीदनादीनवगीर्भरः ॥ २०३ ॥
5 [4]एकाहविहितस्फीतप्रबन्धोऽयं कृतीश्वरः । कविराज इतिख्यातः श्रीपालो नाम मानभूः[5] ॥ २०४ ॥
श्रीदुर्लभसरोराजस्तथा रुद्रमहालये । अनिर्वाच्यरसैः काव्यैः प्रशस्तीरकरोदसौ ॥ २०५ ॥
महाप्रबन्धं चक्रे च वैरोचनपराजयम् । विद्वद्भिः सद्भिरन्योऽपि नैवास्य तु किमुच्यते ॥ २०६ ॥
श्रुत्वेति स्मितमाधाय देवबोधकविर्जगौ । काव्यमेकं लसद्गर्वपर्वताधित्यकासमम् ॥ २०७ ॥

तथा हि–

10 शुक्रः कवित्वमापन्नः एकाक्षिविकलोऽपि सन् ।
चक्षुर्द्वयविहीनस्य युक्ता ते कविराजता[6] ॥ २०८ ॥

अतिशीघ्रे तथा गुम्फे भित्त्यन्तःपूरणाकृतौ । कोऽभिमानस्ततो धीमन्नेकमस्मद्वचः शृणु ॥ २०९ ॥

तद्यथा–

भ्रातर्ग्रामकुविन्द ! कन्दलयता वस्त्राण्यमूनि त्वया
15 गोणीविभ्रमभाजनानि बहुशोऽप्यात्मा किमायास्यते ।
अप्येकं रुचिरं चिरादभिनवं वासस्तदासूत्र्यते
यन्नोज्झन्ति कुचस्थलात् क्षणमपि क्षोणीभृतां वल्लभाः ॥ २१० ॥

समस्यां दुर्गमां कांचित् पृच्छतेति नृपोदिते । श्रीपाल ऊचिवानेकं स्फुटं शिखरिणीपदम् ॥ २११ ॥

तच–

20 'कुरङ्गः किं भृङ्गो मरकतमणिः किं किमशनि'

तत्पाठपृष्ट एवायमवदत्[7] कविनायकः । चरणत्रितयं वृत्ते को विलम्बोऽप्ययमूदृशि ॥ २१२ ॥

तद्यथा–

चिरं चित्तोद्याने चरसि च मुखाब्जं पिबसि च
क्षणादेणाक्षीणां विषयविषमुद्रां हरसि च ।
25 नृप ! त्वं मानाद्रिं दलयसि च किं कौतुककरः
कुरङ्गः किं भृङ्गो मरकतमणिः किं किमशनिः ॥ २१३ ॥

गृहाण चैकं मत्पार्श्वे किंशब्दं व्यवहारतः । दौस्थ्यं यत्र भवेद् यस्याधमर्णो न स तत्र किम् ॥ २१४ ॥
निगद्यन्ते समस्याश्चामूदृश्यो विषमार्थकाः । एकपादा द्विपादा च त्रिपदी च बुधोचिता ॥ २१५ ॥
किंशब्दबहुलास्त्वेताः शून्यप्रश्ननिभा नृप ! । सदृक्षा भणितेरस्य निन्द्या संसदि धीमताम्[8] ॥ २१६ ॥

30 तथा हि–

( १ ) पौत्रः सोपि पितामहः ।
( २ ) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

---

1 N इह महि° । 2 N इत्युक्त्वा च । 3 A D प्रतीहारः । 4 N एकोहं विहित° । 5 N भूमिभूः । 6 N कविराजिता । 7 N एवासाववदत् । 8 B N निंद्या कोविदसम्पदां ।

(३) नमः कर्पूरपूराभं, चन्द्रो विद्रुमपाटलः । कज्जलं क्षीरसङ्काशं······
वाचाऽनुपदमेवासौ ताः पुपूरे कवीश्वरः । सिद्धसारस्वतानां हि विलम्बकविता कुतः ॥ २१७ ॥

ताश्च–

मूर्तिमेकां नमस्यामः शम्भोरम्भोमयीमिमाम् ।
अब्जोत्पन्नतया यस्याः (१) पौत्रः सोऽपि पितामहः ॥ २१८ ॥ 5
चलितश्चकितो [1]भीतस्तव देव ! प्रयाणके ।
(२) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ २१९ ॥
(३) नभः कर्पूरपूराभं चन्द्रो विद्रुमपाटलः ।
कज्जलं क्षीरसङ्काशं करिष्यति शनैः शनैः ॥ २२० ॥

इत्थं गोष्ठ्या महाविद्वन्शिरःकम्पकृता तदा । कियन्तमपि निर्वाह्य क्षणं सौधं ययौ नृपः ॥ २२१ ॥ 10

§११. अन्यदा श्रीदेवसूरिजितवादक्षणे मुदा । दत्ते वित्ते नरेन्द्रेण लक्षसंख्ये तदुद्धृते ॥ २२२ ॥
अपरेणापि वित्तेन जैनप्रासाद उन्नते । विधापिते ध्वजारोप[2]विधानाख्यमहामहे ॥ २२३ ॥
देवबोधोऽपि सत्पात्रं तत्राहूयत हर्षतः । समायातेन भूपेन धर्मे ते स्युः समा यतः ॥ २२४ ॥
श्रीजयसिंहमेर्वाख्यमहेशभुवनाग्रतः । आगच्छन् शङ्करं दृष्ट्वा शार्दूलपदमातनोत् ॥ २२५ ॥

यतः– 15

एको रागिषु राजते प्रियतमादेहार्द्धहारी हरो
श्रीमद्राजविहारेऽसावाययावुत्सवोन्नते । दृष्ट्वाऽर्हन्तं द्वितीयं च पदं प्रणिजगाद सः ॥ २२६ ॥
नीरागेषु जिनो विमुक्तललनासङ्गो न यस्मात् परः ।
ततस्तत्र महापर्षत्पार्षद्यान् बुधशेखरान् । सावहेलं समीक्ष्याह स्वज्ञानाशावलिप्तधीः[3] ॥ २२७ ॥

तद्यथा– 20

दुर्वारस्मरघस्मरोरगविषव्यासङ्गमूढो जनः
शेषः कामविडम्बितो न विषयान् भोक्तुं न मोक्तुं क्षमः ॥ २२८ ॥

भद्रासने समासीनः शक्तिप्रकटनाकृते । आह भूपं नरं कञ्चिदानाययत पामरम् ॥ २२९ ॥
राज्ञाऽऽदिष्टः प्रतीहारस्तत्क्षणादानयद् द्रुतम् । श्रीसिद्धाधीशकासारात् कञ्चित् कासारवाहकम् ॥२३०॥
भगवानपि पप्रच्छ किं ते परिचयोऽक्षरे । कियानप्यस्ति स प्राह [4]स्वज्ञातिसदृशं वचः ॥ २३१ ॥ 25
स्वामिन्नाजन्म नो शिक्षे 'था जा' इत्यक्षरे विना । रक्ताक्षवाहे रक्ताक्षस्तत्पुच्छास्यगतागतान् ॥ २३२ ॥
उवाच विदुषां नाथो देवबोधस्तदीयके[5] । उत्तमाङ्गे करं न्यस्यामुष्य वाक् श्रूयतां जनैः ॥ २३३ ॥
ततो दत्तावधानेषु सभ्येषु स्थिरधीरगीः । काव्याभ्यासीव महिषीमहामात्योऽब्रवीदिदम् ॥ २३४ ॥

तं नौमि यत्करस्पर्शाद् व्यामोहमलिने हृदि ।
सद्यः सम्पद्यते गद्यपद्यबन्धविदग्धता ॥ २३५ ॥ 30

इत्याकर्ण्य सकर्णेषूत्कर्णेष्वतिचमत्कृतेः । द्रव्यलक्षं ददौ सिद्धाधीश्वरोऽस्य कवीशितुः ॥ २३६ ॥

§१२. आप्राक् तदीयवैरस्यात् श्रीपालोऽपि कृतिप्रभुः । वृत्तान्यन्वेषयत्यस्यासूयागर्भमना मनाक् ॥ २३७ ॥
अन्यदात्यद्भुतं चारैर्भगवच्चरितं किल । महज्जिन्धमवज्ञेयं सम्यग् विज्ञातमौच्यत ॥ २३८ ॥

---

1 D °चकितश्छन्नस्तव । 2 N ध्वजारोप्य° । 3 N स्वज्ञानासाविलप्तधीः । 4 N प्रज्ञाति° । 5 N देवबोधस्तृतीयके ।

अश्रद्धेयं वचः श्रद्धातव्यमसत्प्रतीतितः । प्रत्यक्षं यद्दृशा दृष्टमपि सन्देहयेन्मनः ॥ २३९ ॥
वेदगर्भः सोमपीथी दग्ध्वा यज्ञोपवीतकम् । अपिबद् गाङ्गनीरेण [1]प्राप्तभागवतव्रतः ॥ २४० ॥
असौ यत्याश्रमाभासाचारः सारस्वते तटे । निशीथे स्वपरीवारवृतः पिबति वारुणीम् ॥ २४१ ॥
राजा बुधः कविः शूरो गुरुर्वक्रः शनैश्चरः । अस्तं प्रयाति वारुण्यासङ्गी चित्रमयं तु न ॥ २४२ ॥
5 अथाह कविराजोऽपि सम्भ्रमोद्भ्रान्तलोचनः । कथं हि जाघटीत्येतच्छ्रद्धेयं नापि वीक्ष्य यत् ॥ २४३ ॥
अस्य तुर्याश्रमस्थस्य भोगैर्व्यवहृतैरपि । नार्थस्तद्दर्शनाचारविरुद्धैस्तु किमुच्यते ॥ २४४ ॥
तेऽप्यूचुः स्वदृशाऽऽलोक्य वयं ब्रूमो न चान्यथा । यस्मादिशत तस्याथ वीक्षयामः प्रतिज्ञया ॥ २४५ ॥
श्रीपालोऽप्यूचिवान् श्रीमज्जयसिंहनरेशितुः । अद्य दर्शयत श्यामोत्तरार्धे तत्र सङ्गते ॥ ॥ २४६ ॥
ओमिति प्रतिपन्ने च तैर्नृपाग्रे यथातथम् । व्यजिज्ञपदिदं सर्वं सिद्धसारस्वतः कविः ॥ २४७ ॥
10 इत्याकर्ण्याह भूपालः सत्यं चेन्मम दर्शय । इदं हि न प्रतीयेत साक्षाद्दृष्टमपि स्फुटम् ॥ २४८ ॥
अर्धरात्रे ततो राजापसर्पं प्रेक्षिताध्वना । [2]स्रवन्तीसैकतं प्राप दुःप्रापं कातरैर्नरैः ॥ २४९ ॥
वृक्षवल्लीमहागुल्मान्तरितो यावदीक्षते । भूपस्तावद् ददर्शामुमुन्मत्तानुचराश्रितम् ॥ २५० ॥
यथेच्छं गीयमानत्वादव्यक्तध्वनिसम्भृतम् । चषकास्यस्फुरन्मद्यप्लुतवक्त्रसखीसखम् ॥ २५१ ॥–युग्मम् ।
प्रतीतः सिद्धराजोऽपि दृष्ट्वेदमतिवैशसम् । विचिकित्सां दधौ चित्ते नासाकूणन[3]पूर्वकम् ॥ २५२ ॥
15 अहो संसारवैचित्र्यं विद्वांसो दर्शनाश्रिताः । इत्थं विलुप्तमर्यादाः कुर्वते कर्म कुत्सितम् ॥ २५३ ॥
इदानीं यद्यहं साक्षादेनं नो जल्पयाम्यथ । प्रातः किमेष मन्येत दुश्चरित्रमिदं ननु ॥ २५४ ॥
इति ध्यायत एवास्य वाणी भूपस्य कर्णयोः । प्राविशत् प्रकटा कोटिं रसप्राप्तातिकेलितः ॥ २५५ ॥
वीक्ष्य प्रान्तदशं खेशं तत्तेजःप्रसरोज्ज्वला । विभान्त्यनु प्रयाति स्म ज्योत्स्ना कटसतीस्थितिः[4] ॥ २५६ ॥
प्रसन्नास्वादमत्यन्तप्रसन्नास्वादमेककम् । विधायाथ निजं स्थानं गम्यतेऽथ विरम्यते ॥ २५७ ॥
20 इतिस्मृतिमनु क्ष्मापः[5] प्रकटं वदति स्म तम् । अपि नः संविभागोऽस्तु[6] कः स्वादेषु पराङ्मुखः ॥ २५८ ॥
क्षणं ध्यात्वा समुत्पन्नप्रतिभः प्रोचिवानिति । भवता निधिना भूप ! दिष्ट्या वर्द्धामहे वयम् ॥ २५९ ॥
सौवर्णपात्रमापूर्यार्पितं तेनाथ भूभृता[7] । यावत् समीक्ष्यते तावत् क्षीरपूर्णं [8]व्यलोकयत ॥ २६० ॥
पपावथामृतास्वादं व्यमृशद् भूपतिः क्षणम् । इदं दुग्धं तु मद्यं वा शक्त्यापावृत्ततद्रसम् ॥ २६१ ॥
चेत् परावृत्तमस्याहो शक्तिप्रातिभमद्भुतम् ! । ततो विसस्रुजेऽनेनावसरोऽयं मनीषिणा ॥ २६२ ॥
25 प्रातर्भूपसभां गत्वा देवबोधस्ततोऽवदत् । आपृच्छ्यसे महाराज ! वयं तीर्थयियासवः ॥ २६३ ॥
श्रीसिद्धभूपतिः प्राह भवादृशमुनीश्वराः । देशस्य शान्तिनीरं कः प्रहेष्यति सकर्णकः ॥ २६४ ॥
आह सोऽप्यर्थवादेन कृतं यत्र [9]क्षितीश्वरः । प्रत्येति खलभाषाभिः स्थितिस्तत्र न युज्यते ॥ २६५ ॥
कुलविद्यावयोज्ञानशक्तयश्चेन्नरं नहि । व्यावर्तयन्ति सम्भिन्द्यकर्म्मभ्यस्तत् [10]परैर्हि किम् ॥ २६६ ॥
देवा देव्यो महामन्त्रा विद्याश्चानेकशो वशे । येषां ताः सिद्धयश्चाष्टौ कल्यास्तेऽर्वाग्[11]जनैर्हि किम् ॥ २६७ ॥
30 ततो भूपाल ! नास्मादृग्योग्या पर्षत् तव स्फुटम् । ईदृग्ग्रामनटग्राम्यसंयोगः सदृशोऽस्तु वः ॥ २६८ ॥
साकूतमवदद् भूपः श्रीपालं कविपुङ्गवम् । शुश्रुवे शमिनो वाक्यं कोपगर्भं ननु त्वया ? ॥ २६९ ॥
प्रज्ञाचक्षुः कविर्दध्यौ कार्यसन्मानदण्डितः । भिक्षुरेष क्रियाभ्रष्टः स्रस्तरूपो यथा भवेत् ॥ २७० ॥

1 B N प्राप्तभागवत° । 2 N अवन्ति । 3 N नासाक्षणन° । 4 N °सतीस्थिति । 5 N °मनुक्ष्मा यः । 6 N संविभागेषु ।
7 A भूभृतः । 8 N व्यलोकयद् । 9 N कृतीश्वरः । 10 N तत्पुरे हि । 11 N कल्पस्तैर्वाग्° ।

उवाच च महाराजाऽचिन्त्यशक्तिभृतो ह्यमी । महाप्रभावा मुनयो न प्रहेयाः स्वदेशतः ॥ २७१ ॥
नहि द्रव्येण विद्वांस आवर्ज्यन्ते न चाटुभिः । परिज्ञातस्वभावा हि सद्भावात्सत्येन केवलम् ॥ २७२ ॥
श्रुत्वा श्रव्यं वचस्तथ्यं स्वशिरो मुनिपादयोः । स्पर्शयित्वा जगौ वाक्यं राजा विनयसम्भृतम् ॥ २७३ ॥
मुनिसद्वृत्तमाहात्म्याद् भूपालाः पालकाः क्षितेः[1] । वासवा इव शोभन्ते तत्र हेतुर्नहीतरः ॥ २७४ ॥
अस्मद्देशान्तरा तिष्ठ क्रियानिष्ठमुनीश्वर ! । अर्थिप्रणयभङ्गं हि महात्मानो न कुर्वते ॥ २७५ ॥ 5
इत्थं गिरां भरैः प्रीतोऽवातिष्ठत गुरुस्तदा । तिस्रः समाः समासन्नदारिद्र्यश्च[2] शनैरभूत् ॥ २७६ ॥
तस्य न क्रेय-विक्रेयव्यवहाराद् धनागमः । राजदत्तं हि भुज्येत तद्विना दौःस्थ्यमाययौ ॥ २७७ ॥
सूरेः श्री**हेमचन्द्र**स्य विदितं वृत्तमप्यभूत् । श्री**श्रीपाल**श्च तत्पार्श्वेऽमश्रयत् तदिदं रहः ॥ २७८ ॥
असौ भिक्षुर्निजाचारभ्रष्टो नष्टक्रियः[3] कुधीः । निष्ठानिष्ठयतिव्यूहाद्दश्यवक्त्रः कुवृत्तभूः ॥ २७९ ॥
दारिद्र्यराजधानीत्वादिदानीमृणजर्जरः । मदोद्धतमहालोलल्लोलावशविनष्टभूः ॥ २८० ॥ 10
अधुना सपरीवारो भिक्षया भुक्तिभाक् ततः । दर्शनी दर्शनाचारे स्थापितो निजलक्षणैः ॥ २८१ ॥
सिद्धीनामष्टसंख्यानां षड् ययुस्तस्य सद्गुणैः । अणिमा लघिमा च द्वे पोषं[4] प्रापतुरद्भुतम् ॥ २८२ ॥
श्री**सिद्धाधीश्वरं** मूर्त्तं देवेन्द्रमिव तेजसा । सौधमौलिस्थकाकोल इव सिंहासने स्थितः ॥ २८३ ॥
वर्णाश्रमगुरुं भूमावुपदेशयति स्म यः । निर्विवेकस्य तस्यैतन् मान्यावज्ञालताफलम् ॥ २८४ ॥
मया चाश्रावि तन्मन्त्रो यद्दणोपद्रवो हि नः । राज्यपूज्यं **हेमचन्द्रं** विना न प्रतिहन्यते ॥ २८५ ॥ 15
तदसौ चेत् समायाति पूज्यपार्श्वे ततोऽपि न । मान्योऽसौ पतितस्यास्य वक्त्रं कः प्रेक्षते सुधीः ॥ २८६ ॥
अथोचुर्गुरवो यूयं यज्जल्पत तदेव तत् । एकत्रास्य गुणे नस्तु बहुमानः परत्र नः ॥ २८७ ॥
दृश्यते [5]ऽनन्यसामान्यं सांक्रामिक[6]गुणोत्तरम् । सारस्वतं न कुत्रापि समयेऽस्मिन्नमुं विना ॥ २८८ ॥
ततोऽसौ निर्विषः सर्प इव चेदागमिष्यति । म्लानमानः[7] कुतो धीमान् लभ्याऽनेनापि सत्कृतिः ॥ २८९ ॥
अथाह **कविराजो**ऽपि गुणमेवेक्षते महान् । कृष्णवत् कृष्णमुक्तासुश्वदन्तधवलत्ववत् ॥ २९० ॥ 20
स्वाभिप्रायो मया प्रोचे पुनः पूज्यैर्बहुश्रुतैः । यथाविचारं कार्याणि कार्याणि गरिमोचितम् ॥ २९१ ॥
अन्यदाभिनवग्रन्थगुम्फाकुलमहाकवौ । पट्टिकापट्टसंघातलिख्यमानपदव्रजे ॥ २९२ ॥
शब्दव्युत्पत्तयेऽन्योन्यं कृतोहापोहबन्धुरे । पुराणकविसन्दब्ध[8]दृष्टान्तीकृतशब्दके ॥ २९३ ॥
ब्रह्मोल्लासनिवासेऽत्र भारतीपितृमन्दिरे । श्री**हेमचन्द्र**सूरीणामास्थाने सुस्थकोविदे ॥ २९४ ॥
क्षुधातुरपरीवारप्रेरितः स परेद्यवि । अपराह्णे समागच्छत् प्रतीहारनिवेदितः ॥२९५॥—चतुर्भिः कलापकम् । 25
अभ्युत्तस्थुश्च ते **देवबोध**विद्वन्मतल्लिकाम् । मन्त्रौषधिप्रभास्तब्धवह्निवच्छीततेजसम् ॥ २९६ ॥
स्वागतं स्वागतं विद्वत्कोटीर जगती[9] श्रुतः । कृतपुण्यं दिनं यत्र जातस्त्वं लोचनातिथिः ॥ २९७ ॥
तदलंक्रियतामर्धार्द्धासनं नः कलानिधे ! । सङ्कटेष्वपि निर्व्यूढकलाप्रागल्भ्यभूषित ! ॥ २९८ ॥
श्रुत्वेति **देवबोधो**ऽपि दध्यौ मे मर्म वेत्त्यसौ । कथनात् कथनातीतकलातो वा न विद्महे ॥ २९९ ॥
यथातथा महाविद्वानसौ भाग्यश्रियोर्जितः । अत्र को मत्सरः स्वच्छे बहुमानः शुभोदयः ॥ ३०० ॥ 30
समयेऽद्यतने कोऽस्य समानः पुण्य-विद्ययोः । गुणेषु कः प्रतिद्वन्द्वी तस्मात् प्राञ्जलतोचिता ॥ ३०१ ॥
अथोपाविशदेतेनानुमतेऽर्द्धासने कृती । मनसा मन्यमानश्च पुंरूपां तां सरस्वतीम् ॥ ३०२ ॥
सविस्मयं गिरं प्राह सारसारस्वतोज्ज्वलः । पार्षद्यपुलकाङ्कूरघनाधनघनप्रभाम् ॥ ३०३ ॥

---

1 A क्षितौ; N क्षितैः । 2 A °दारिद्रश्च; N समासन्नादरिद्र° । 3 N नष्टः क्रिया । 4 N योषे । 5 N नान्यसामान्यं । 6 N संक्रामित° । 7 N °मानकृतो । 8 N °संदृष्ट° । 9 A B जगतीश्वरः ।

तथा हि–

**पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ।**
**षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ॥ ३०४ ॥**

व्याधूतशिरसः श्लोकमेनं सामाजिका हृदा । श्रुत्वा सत्यार्थपुष्टिं च तेऽतुलं विस्मयं दधुः ॥ ३०५ ॥
5 ततः **श्रीपाल**माकार्य्याप्रेहयत् तेन स प्रभुः । आद्यो धर्मो व्रतस्थानां विरोधोपशमः खलु ॥ ३०६ ॥
अस्य वृत्तं ततः श्रीम**ज्जयसिंह**नरेशितुः । ज्ञापयित्वा च तत्पार्श्वाद् द्रव्यलक्षमदापयत् ॥ ३०७ ॥
अन्यदर्शनसम्बद्धविद्वत्प्रणतितस्तदा । प्रहीणभाग्यशक्त्यायुःस्थितिं स्वं सुविमृश्य सः ॥ ३०८ ॥
तत्रतत्रानृणो भूत्वा **देवबोधो** महामतिः । तेन द्रव्येण **गङ्गा**यां गत्वाऽसाध्नोत् परं भवम् ॥–युग्मम् ।
§ १३. अन्यदा **सिद्धभूपालो** निरपत्यतयार्दितः । तीर्थयात्रां प्रचक्रामानुपानत्पादचारतः ॥ ३१० ॥
10 **हेमचन्द्र**प्रभुस्तत्र सहानीयत तेन च । विना चन्द्रमसं किं स्यान्नीलोत्पलमतन्द्रितम् ॥ ३११ ॥
द्विधा चरणचारेण प्रभुर्गच्छन्नदृश्यत । शनैर्यान् जीवरक्षार्थं मूर्तिमानिव संयमः ॥ ३१२ ॥
अर्थितैर्वाहनारोहे निषिद्धश्चरितस्थितेः । किञ्चिद् दूनो जडा यूयमिति तानाह सौहृदात् ॥ ३१३ ॥
प्राकृतेनोत्तरं प्रादाद् यद् वयं निजडा इति । राजा चमत्कृते [1]दध्यावूचेऽसौ सजडा जडाः ॥ ३१४ ॥
वयं तु सुधियः स्वीयमाचारं[2] दधतो ननु । निजडा इत्यहो सूरेर्ध्वनिव्याख्यातिचातुरी ॥ ३१५ ॥
15 दिनत्रयं न संजग्मुर्नृपस्याध्वनि सोऽपि च । कुपितानिव[3] विज्ञाय सान्त्वनाय तदागमम् ॥ ३१६ ॥
प्रतिसीरान्तरस्थानामाचामाम्लेन भुञ्जताम् । तामपावृत्य भूपालोऽपश्यत् तदशने विधिम् ॥ ३१७ ॥
अहो जितेन्द्रिया एते छिन्नमन्नं हि नीरतः । आकृष्य गृह्णते तद् दुश्चरमेतत् तपो ध्रुवम् ॥ ३१८ ॥
अज्ञान एव लोकोऽयममून् मिष्टान्नभोजिनः । भक्तेरतिशयाद् भव्यलोकानां वदति ध्रुवम् ॥ ३१९ ॥
ध्यात्वेत्याह भवद्देहव्यथोच्छेदाय कर्कशम् । नाभक्तेरुक्तमित्यागः पुन्नाग ! क्षम्यतां मम ॥ ३२० ॥
20 सूरिः प्राह महाराज ! कुर्याद् गीः किं खरा प्रिया । अरक्तद्विष्टवृत्तानां नृपतेर्दुर्गतस्य वा ॥ ३२१ ॥

यतः–

**भुञ्जीमही वयं भैक्षं जीर्णं वासो वसीमहि ।**
**शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ३२२ ॥**

सम्मान्य तांस्ततो राजा स्थानं **सिंहपुरा**[4]भिधम् । दत्त्वा द्विजेभ्य आरूढः श्रीम**च्छत्रुञ्जये** गिरौ ॥
25 श्रीयुगादिप्रभुं नत्वा तत्राभ्यर्च्य च भावतः । मेने स्वजन्म भूपालः कृतार्थमतिहर्षभूः ॥ ३२४ ॥
ग्रामद्वादशकं तत्र ददौ तीर्थस्य भूमिपः । पूजायै यन्महान्तस्तां [5]स्वानुमानेन कुर्वते ॥ ३२५ ॥
ततश्च गिरिमार्गेणाचिराद् **रैवतका**चलम् । निकषा निकषः पुण्यवतां भर्ता भुवोऽगमत् ॥ ३२६ ॥
स प्रादापयदावासान् **संकलीग्राम**सन्निधौ । गिरिं तत्र स्थितोऽपश्यन्नेत्रामृतरसायनम् ॥ ३२७ ॥
तदा श्रीनेमिचैत्यस्य पर्वतोर्द्ध्वभुवि[6] स्थितेः । जीर्णोद्धारे कारिते च श्रीम**त्सज्जनमन्त्रि**णा ॥ ३२८ ॥
30 प्रासादं धवलं दृष्ट्वा राज्ञा पृष्टः स चाब्रवीत् । तीर्थप्रभावनाहर्षवशसम्फुल्ललोचनः ॥ ३२९ ॥
देव ! यादवसद्वंशावतंसस्य जिनेशितुः । प्रासादः स्वामिपादानां कृतिरेषा समीक्ष्यते* ॥३३०॥–युग्मम् ।

---

1 D °कृतेर्दध्या° । 2 N स्वीयस्वाचारं । 3 N कुपितानि च । 4 N सिंहासनाभिधम् । 5 N °चानुमाने° । 6 N पर्वतोर्द्धभुवि स्थितः । * B आदर्शे एतच्छ्लोकयुग्ममेतादृशं लभ्यते–

प्रासादं धवलं दृष्ट्वा राज्ञा पृष्टः सचाब्रवीत् । देव ! यादवसद्वंशावतंसस्य जिनेशितुः ॥
दारिद्र्यौघविनाशस्य सुखसंपत्तिदायकः । प्रासादः स्वामिपादानां कृतिरेषा समीक्ष्यते ॥

नृपतिः प्राह जाने श्री**हेमचन्द्रो**पदेशतः । **उज्जयन्त**महातीर्थं श्रीनेमिस्तत्र तीर्थकृत् ॥ ३३१ ॥
जगत्पूज्यः कृतिर्मेऽस्तु कथमेषेति संशये । श्रुत्वेत्यमात्य आह स्मावधानादवधार्य्यताम् ॥ ३३२ ॥
अद्य प्राग् नवमे वर्षे स्वामिनाऽधिकृतः कृतः । आरुरोह गिरिं जीर्णमद्राक्षं च जिनालयम् ॥ ३३३ ॥
प्रतिवर्षं त्रिलक्षीं[1] च व्ययित्वा चैत्यमुद्धृतम् । स्वामिपादैरनुमतं चेत् प्रमाणमिदं न चेत् ॥ ३३४ ॥
सप्तविंशतिलक्षांश्च द्रम्मान् गृह्णातु भूपतिः । इत्याकर्ण्य प्रभुः प्राह पुलकोद्भेदमेदुरः ॥ ३३५ ॥ 5
कथमुक्तमिदं मन्त्रिन् ! तुच्छं द्रव्यादशाश्वतात् । वपुः स्थिरं ममाकार्षीः पुण्यं कीर्तिमयं महत् ॥ ३३६ ॥
त्वत्समः स्वजनः कोऽस्ति[2] ममेह-परलोकयोः । सखा विषीद मा तस्मादस्मिन्नारुह्यते ततः ॥ ३३७ ॥
वचोऽनुपदमीशश्चाधित्यकायां ययौ गिरेः । मण्डपे शुद्धमेदिन्यां स्थित्वाऽष्टाङ्गं नतो जिनम् ॥ ३३८ ॥
पीठेष्वानीयमानेषु न्यवारयत तं जनम् । तीर्थेऽत्र नोपवेष्टव्यं परेणाप्यासनादिके ॥ ३३९ ॥
स्वापस्तल्पे विधेयो न भुक्तौ नाड्डनिका तथा । स्त्रीसङ्गः सूतिकर्म्मापि न दन्तोऽथ विलोडनम् ॥ ३४० ॥ 10
इत्यादि सिद्धमर्यादा वर्त्ततेऽद्यापि शाश्वती । ततोऽभ्यर्च्य जिनं स्वर्णरत्नपुष्पोत्करैर्वरैः ॥ ३४१ ॥
ततो**ऽम्बाशिखरं** गत्वा तां संपूज्य ननाम च । **अवलोकनशृङ्गं** चारुरोह स तु कौतुकी ॥ ३४२ ॥
तत्र श्रीनेमिनाथं च नत्वा भक्तिभरानतः । दिशोऽवलोकयामास तत ऊचे स चारणः ॥ ३४३ ॥

यतः—

**मइं नायं सीधेस जं चडिउ गिरनारसिरि ।** 15
**लइआ[3] च्यारु[4] देस अलयउं[5] जोअइ[6] कर्णऊत्र ॥ ३४४ ॥**

पर्वतादवतीर्याथ श्री**सोमेश्वरपत्तनम्** । ययौ श्री**हेमचन्द्रे**ण सहितश्च शिवालयम् ॥ ३४५ ॥
सूरिश्च तुष्टुवे तत्र परमात्मस्वरूपतः । ननाम चाविरोधो हि मुक्तेः परमकारणम् ॥ ३४६ ॥

तथा हि—

**यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया ।** 20
**वीतदोषकलुषः स चेद् भवानेक एव भगवन्नमोऽस्तु ते ॥ ३४७ ॥**

महादानानि दत्त्वा च पूजाश्च महिमाद्भुताः । व्यावृत्तः **कोटिनगरं** प्रापदम्बिकयाहृतम् ॥ ३४८ ॥
अपत्यचिन्तयाऽऽक्रान्तोऽम्बिकामाराधयत् ततः । श्री**हेमसूरि**भिर्ब्रह्ममूलावासैरिहादरात् ॥ ३४९ ॥
उपोष्य त्रिदिनीं[7]ते चाह्वयंस्तां शासनामरीम् । प्रत्यक्षीभूय साऽप्याह[8] शृणु वाचं मुने ! मम ॥ ३५० ॥
नास्त्यस्ति सन्ततेर्भाग्यं जीवोऽपीदृग् न पुण्यभूः । समयेऽत्र **कुमार**स्य भूपभ्रातृसुतस्य च ॥ ३५१ ॥ 25
स भावी भूपतिः पुण्यप्रतापमहिमोर्जितः । राज्यान्तराणि जेतासौ भोक्ता च परमार्हतः ॥ ३५२ ॥
**अणहिल्लपुरं** प्रायादनायासोत्सवोदयम् । अन्तर्दूनः सुताभावप्रजापीडनशङ्कितः ॥ ३५३ ॥

§ १४. इतः श्री**कर्णभूपाल**बन्धुः क्षत्रशिरोमणिः । **देवप्रसाद** इत्यासीत् प्रासाद इव सम्पदाम् ॥ ३५४ ॥
तत्पुत्रः श्री**त्रिभुवनपालः** पालितसद्व्रतः । **कुमारपाल**स्तत्पुत्रो राज्यलक्षणलक्षितः ॥ ३५५ ॥
अथ श्री**सिद्धभूमीशः** पुत्राशाभङ्गदुर्मनाः । आह्वाययत दैवज्ञान् परमज्ञानिसंनिभान् ॥ ३५६ ॥ 30
महचारायसद्भाव-प्रश्नचूडामणिक्रमैः । केवलीभिश्च संवाद्य तेऽप्याचख्युः प्रभोः पुरः ॥ ३५७ ॥
स्वामिन् ! **कुमारपालो**ऽसौ युष्मद्बन्धुसुतो[9] ध्रुवम् । अलंकरिष्यते राज्यमनुत्वा न चलेदिदम् ॥ ३५८ ॥

---

1 N नृलक्ष्मीं । 2 N कोऽन्यो । 3 A लइया । 4 A चाऊ; B चार । 5 A अलयुं; B अलिकं । 6 A B जोइ । 7 N त्रिदिनान्ते । 8 N सा प्राह । 9 N बन्धुसु तु ।

प्रतापाक्रान्तदिक्चक्रोऽनेकभूपालजित्वरः । भविष्यति पुनस्तस्य पश्चाद् राज्यं विनंक्ष्यति ॥ ३५९ ॥
श्रुत्वेति भूपतिर्भाव्यं भवतीति विदन्नपि । तत्र द्वेषं परं वोढा वधेच्छुरभवत् ततः ॥ ३६० ॥
कथंचिदिति स ज्ञात्वाऽपसृत्य शिवदर्शने । जटामुकुटवान् भस्मोद्धूलनः सत्तपो दधे ॥ ३६१ ॥
विशप्रमन्यदा चारैर्जटाधरशतत्रयम् । अभ्यागादस्ति तन्मध्ये भ्रातृपुत्रो भवद्रिपुः ॥ ३६२ ॥
भोजनाय निमन्त्र्यन्ते ते सर्वेऽपि तपोधनाः । पादयोर्यस्य पद्मानि ध्वजश्छत्रं स ते द्विषन् ॥ ३६३ ॥
श्रुत्वेत्याह्वाप्य तान् राजा तेषां प्राक्षालयत् स्वयम् । चरणौ भक्तितो यावत् तस्याप्यवसरोऽभवत् ॥३६४॥
पद्मेषु दृश्यमानेषु पदयोर्दृष्टिसञ्ज्ञया । ख्यातेऽत्र तैर्नृपो ज्ञानात्[1] **कुमारो**ऽपि बुबोध तत् ॥ ३६५ ॥
ततः कमण्डलुं हस्ते कृत्वा प्रश्रावदम्भतः[2] । बहिर्भूय नृपावासादुपलक्षणभीर्दिने ॥ ३६६ ॥
वसतिं **हेमसूरी**णां त्रस्तः स्रस्तवपुर्बलः । आययौ भूपतो रक्ष रक्षेत्याख्यन् स्खलद् गिरा ॥ ३६७ ॥
प्रभुभिः साहसात् ताडपत्रलक्षान्तराहितः । राजमर्त्यैः पदायातैर्व्यालोकि ननु वेक्षितः[3] ॥३६८॥–युग्मम् ।
निश्याकृष्य प्रेषितश्च प्रायाद् देशान्तरं पुनः । प्राग्वदागात् साहसिक्यमहो भाग्यस्य लक्षणम् ॥ ३६९ ॥
तथा निर्गत्य तस्मात्तु **वामदेव**तपोवने । तत्तीर्थस्नानदम्भेन जटी प्रायादपायभीः ॥ ३७० ॥
**आलि**नाम्नः कुलालस्य यावदालयसन्निधौ । आययौ पृष्ठतो लग्नान् सादिनस्तावदैक्षत ॥ ३७१ ॥
आह प्रजापते ! रक्ष शरणागतवत्सल ! । मां संकटादतो रक्ष तत्रमागतमेव यत् ॥ ३७२ ॥
स च [4]सञ्चितनीवाहकोणे संस्थाप्य तं तदा । मुमोच वह्निमह्नाय विमुच्य तदवस्थितिम् ॥ ३७३ ॥
स तुरङ्गिभिरायातैः पृष्टः कोऽपि जटाधरः । तत्रायातो नवाऽजल्पि न व्यग्रत्वान्मयेक्ष्यत ॥ ३७४ ॥
निर्विण्णानादरावेते व्यावृत्य प्रययुस्तदा । रात्रौ सोऽपि बहिः कृष्टस्तेन देशान्तरेऽचलत् ॥ ३७५ ॥
§ १९. **स्तम्भतीर्थपुरं** प्रायाद् द्विजेनानुगतस्ततः[5] । तदा **वोसरिणा** श्रीमान् कुमारः स्फारवृत्तभूः ॥३७६॥
**श्रीमालवंश**भूस्तत्र व्यवहारी महाधनः । समस्त्यु**दयाना**भिख्यस्तस्य पार्श्वेऽगमद्[6] बटुः ॥ ३७७ ॥
एकान्तेऽस्य स्ववृत्तान्ते तेन सत्ये निवेदिते । अवादीद् वणिजां श्रेष्ठः किंचित्प्रार्थितशम्बलः ॥ ३७८ ॥
अनभीष्टो महीशस्य यस्तेनार्थो न नः स्फुटम् । तद् द्रागपसरेह त्वां मा द्राक्षू राजपूरुषाः ॥ ३७९ ॥
बटो ! स्वामिनमात्मीयं पुरः सीमां प्रहापय । एवमुक्तः स नैराश्यं प्राप प्राप्तभयोदयः ॥ ३८० ॥
श्रुत्वा **कुमारपालो**ऽपि तत्पुरं प्राविशन् निशि । बुभुक्षाक्षामकुक्षिः सन् चतुर्थे लङ्घने तदा ॥ ३८१ ॥
सूरिः **श्रीहेमचन्द्र**श्च चतुर्मासकमास्थितः । तदा चारित्रसज्ज्ञान[7]लब्धिभिर्गौतमोपमः ॥ ३८२ ॥
उद्यद्व्याख्यानलीलाभिर्वारिदस्येव वृष्टिभिः । शीतीकुर्वन् सदा भव्यमनोभूमिं शमिप्रभुः ॥ ३८३ ॥
कथंचिदपि तत्रागात् **कुमारो**ऽपीक्षितश्च तैः । आकृत्या लक्षणैश्चायमुपालक्षि विचक्षणैः ॥ ३८४ ॥
वरासन्युपवेश्योचे राजपुत्रास्व निर्वृतः । अमुतः सप्तमे वर्षे पृथ्वीपालो भविष्यसि[8] ॥ ३८५ ॥
*स प्राह पूज्यपादानां प्रसादेन भविष्यति । सर्वं कथं [9]तु स[10] प्राप्यः कालो[11] निःकिंचनैः क्षुधा ॥३८६॥
द्वात्रिंशतमथ द्रम्मानस्य श्रावकपार्श्वतः । दापयित्वा पुनः प्राहुः शृण्वेकं नो वचः स्थिरम् ॥ ३८७ ॥
अद्यप्रभृति दारिद्र्यं नायाति तव सन्निधौ । व्यवहारैरमोच्योऽसि भोजनाच्छादनादिभिः ॥ ३८८ ॥
एवं भावीति चेद् राज्ये प्राप्ते मम कृतं विभो ! । अवलोक्यमिदानीं तु बहूक्तैः फल्गुभिः किमु ॥३८९॥
इत्युक्त्वा प्रययौ देशान्तरं गूढो नराधिपः । घनं घनाघनैश्छन्न इव पार्वणचन्द्रमाः ॥ ३९० ॥

---

1 N जानात् । 2 N प्रस्ताव° । 3 B N न तु वीक्षितः, A ननु वीक्षितः । 4 N चिन्तित । 5 N D तदा । 6 N °मह-द्वद्धः । 7 N संज्ञात° । 8 D N भविष्यति । * एष पूर्वार्द्धो नास्ति A B N आदर्शपुस्तके । 9 B N न । 10 A B सुप्राप्यः । 11 B N कालं ।

कापालिकव्रते[1] कौले शैवे चित्रपटोत्तरे। चरन् कदापि कुत्रापि कृत्रिमे कृत्रिमक्रमः ॥ ३९१ ॥
ततो वर्षाणि सप्तापि दिनानीवात्यवाहयत्। गुरुवाक्यैर्मनो बिभ्रत् सङ्कटेऽपि विसङ्कटम् ॥ ३९२ ॥
तस्य **भोपलदेवी**ति कलत्रमनुगाऽभवत्। छायेव सर्वावस्थास्वमुञ्चन्ती सविधे स्थितिम् ॥ ३९३ ॥

द्वादशस्वथ वर्षाणां शतेषु विरतेषु च।
एकोनेषु महीनाथे सिद्धाधीशे दिवं गते ॥ ३९४ ॥ 5

ज्ञात्वा कुतोऽपि सत्त्वाढ्यः **कुमारो**ऽगान्निजं पुरम्। अस्थादासन्नदेशस्थो वासके[2] श्रीतरोरधः ॥ ३९५ ॥
दुर्गादेव्याः स्वरं तत्र मधुरं शुश्रुवे सुधीः। तामाजुहाव भाग्यस्य जिज्ञासुः प्रमितिं तदा ॥ ३९६ ॥
मम पश्यसि चेद् राज्यं देवि ज्ञाननिधे ! ततः। उपविश्यैव मे मूर्ध्नि स्वरं श्रुतिसुखं कुरु ॥ ३९७ ॥
वचनानन्तरं साऽपि तथैवाधादतिस्फुटम्। 'तू राज' इति संरावं तश्चेतःसौधदीपकम् ॥ ३९८ ॥
आयात् पुरान्तरा श्रीमत्**सांब**स्य मिलितस्ततः। चित्ते सन्दिग्धराज्याप्तिनिमित्तान्वेषणादृतः ॥ ३९९ ॥ 10
स तेन सह संगत्य पार्श्वे श्री**हेम**सुप्रभोः। तन्निषद्यावृते पट्टे उपविष्टो विशिष्टधीः[3] ॥ ४०० ॥
भविष्यत्येव ते राज्यं यन्निविष्टोऽस्मदासने। एतदेव निमित्तं न इत्यमुष्य गुरुर्जगौ ॥ ४०१ ॥
राज्येच्छया पादपातीति विगानभिया नहि। नतोऽहमिति शंक्यो न प्रभो दुर्विनयो मयि ॥ ४०२ ॥
तत्रास्ति **कृष्णदेवाख्यः** सामन्तोऽश्वायुतस्थितिः। स्वसुः पतिः **कुमार**स्य मिलितो निशितस्य च ॥ ४०३ ॥
—युग्मम्। 15

श्री**सिद्धराजमेरौ** च संजग्मुः शिवमन्दिरे। प्रधाना राज्यसर्वस्वं राज्ययोग्यपरीक्षिणः ॥ ४०४ ॥
**कुमारो**ऽपि पुरस्यान्तराऽऽजगाम चतुष्पथे। एकत्र सङ्गतानां च प्रधानानां तदाऽमिलत् ॥ ४०५ ॥
**कृष्णः** प्रवेशयामास प्रासादे तं करे कृतम्। तत्रापरौ च तस्याते[4] राजपुत्रौ प्रवेशितौ ॥ ४०६ ॥
तयोरेकः प्रणम्यात्र पार्षद्यान् स उपाविशत्। अपरोऽपि स्वसंव्यानपटं[5] मुत्कुलमातनोत् ॥ ४०७ ॥
अथ श्री**कृष्णदेवे**नोपविशेत्युदिते सति। संवृत्य वस्त्रयुग्मं स्वमुपाविक्षद् वरासने ॥ ४०८ ॥ 20
व्यचारयन्त नीतिज्ञा एकस्तावत् कृताननतिः। निस्तेजाः परिभूयेत स्वैः परैरपि निन्द्यधीः ॥ ४०९ ॥
सम्भ्रान्तलोचनं पश्यन्नपरो मुत्कलाञ्चलः। तस्य पार्श्वात् परैर्भूपैर्विश्वं राज्यं ग्रहीष्यते ॥ ४१० ॥
असौ **कुमारपाल**श्च दैवज्ञानुमतः पुरा। धीरं पश्यन्निहायातः संवृत्ताञ्चलमण्डलम् ॥ ४११ ॥
निग्रहीता विपक्षाणां विग्रहीता दिगन्तरान्। भविष्यति महाभाग्यः सार्वभौमसमः श्रिया ॥ ४१२ ॥
अभिषेकमिहैवास्य विदध्वं ध्वस्तदुर्द्धियः। आसमुद्रावधिं पृथ्वीं पालयिष्यत्यसौ ध्रुवम् ॥ ४१३ ॥ 25
अथ द्वादशधा तूर्यध्वनिडम्बरिताम्बरम्। चक्रे राज्याभिषेकोऽस्य भुवनत्रयमङ्गलम् ॥ ४१४ ॥
प्रविवेशोत्सवै राजा राजसौधं नृपासनि। निविष्टो गोत्रवृद्धाभिरक्षतैरभ्यवर्द्धत ॥ ४१५ ॥
कृतप्रशमनाचारः प्रतापोग्रः परंतपः। **कुमारपाल**भूपालः पालयामास मेदिनीम् ॥ ४१६ ॥

§ १६. **सपादलक्ष**भूमीश**मर्णोराजं** मदोद्धतम्[6]। विग्रहीतुमनाः सेनामसावेनामसज्जयत् ॥ ४१७ ॥
हास्तिकाश्वीयपादातरथ्याभिरभितो वृतः। धिष्ण्यग्रहौषधीतारानिकरैरिव चन्द्रमाः ॥ ४१८ ॥ 30
चचाल लघु सामन्तमण्डलीकमहाधरैः[7]। अन्यैश्च क्षत्रियैः सेव्यपादाम्भोजयुगस्ततः ॥ ४१९ ॥
दिनैः कतिपयै**रेवाजयमेरुं** सुदुर्ग्रहम्। लंकादुर्गमिवागम्यं नृपः प्राकारमासदत् ॥ ४२० ॥—विशेषकम्।
परितोऽस्य च बब्बूलबदिरीखदिरद्रुमैः। करीरैर्गुपिलं[8] नृणां दुर्गमं योजनद्वयम् ॥ ४२१ ॥

---

1 °व्रतैः। 2 N वासकेः। 3 N °भिशिष्टधीः। 4 N तत्रापरावतस्थाते। 5 N °पदं मुकुल°। 6 N मदोद्धुरम्। 7 N मंडलैकमहीधरैः। 8 N करीरैर्गुंफितं।

बहुधा बहुभिर्मल्लैश्छिद्यमानमपि क्षयम् । प्राप्नोति न ततः खिन्नो व्यावर्त्तत नराधिपः ॥ ४२२ ॥
उपवर्षं समागत्याणहिल्लपुरमध्यतः । चतुर्मास्यां पुनः सैन्यं जातशोषमपोषयत् ॥ ४२३ ॥
प्रावर्त्तत च तस्यान्ते पुनर्ग्रीष्मे न्यवर्त्तत । एवमेकादश समा व्यतीयुः पृथिवीपतेः ॥ ४२४ ॥
मम पीतपराम्भोधेरपि[1] भाग्याधिकः कथम् । **अर्णोराज** इति ध्यायन् क्षणं तस्थौ नराधिपः ॥ ४२५ ॥
5 तस्य **वाग्भटदेवो**ऽस्ति मन्त्री मन्त्रीव नाकिनाम् । नीत्या क्षत्रेण मन्त्रेणो**दयन**स्याङ्गभूस्तदा ॥ ४२६ ॥
अपृच्छत् तं नराधीशः सङ्कटेऽस्मिन् समागते । अस्ति सप्रत्ययः कश्चित् सुरो यक्षोऽथवा सुरी ॥ ४२७ ॥
प्रातिहार्यप्रभावेण भवामो जितकाशिनः । यस्य तस्य मनोऽवश्यं वश्यं नो भवतु ध्रुवम् ॥ ४२८ ॥
व्यजिज्ञपदथ श्रीमान् **वाग्भट**स्तस्य वाग्भटः । अवधार्यं वचः सावधानेन प्रभुणा मम ॥ ४२९ ॥
यदा श्रीस्वामिपादानामादेशात् प्रभुसोदरः । **कीर्त्तिपालो** महाबाहुः **सुराष्ट्रामण्डलं** ययौ ॥ ४३० ॥
10 तद्देशाधीश्वरं निग्रहीतुं **नवघना**भिधम् । अनेकशो विग्रहैश्च खेदिताद्यनराधिपम् ॥ ४३१ ॥
तदा मज्जनकस्तत्र श्रीमा**नुदयना**भिधः । **स्तंभतीर्थपुरा**वासी जज्ञे सैन्यबलप्रदः ॥ ४३२ ॥
अन्यदा गच्छता तत्र **पुंडरीका**द्रिरुद्धुरः । द्रष्टव्यस्यावधेर्दृष्टस्तेन दुष्प्राप्यदर्शनः ॥ ४३३ ॥
आचख्ये च निजेशस्य तस्य माहात्म्यमद्भुतम् । *धर्मश्रद्धाश्रिताश्चर्यादथ सोऽप्यारुरोह तम् ॥ ४३४ ॥
श्रीमद्युगादिनाथं च नमस्कृत्यातिभक्तितः । मेने कृतार्थमात्मानं स ध्यानादनुजः प्रभोः ॥ ४३५ ॥
15 प्रासाद आलुलोके च तेन सोऽप्यतिजर्जरः । ततः श्री**कीर्त्तिपालेन** प्रोचेऽसौ भांडशालिकः ॥ ४३६ ॥
प्रासादस्यास्य नश्चेतस्युद्दिधीर्षा स्थिता ध्रुवम् । जित्वामुं विग्रहं प्रत्यावृत्तैः सर्वं विधास्यते ॥ ४३७ ॥
**पर्वता**दवतीर्याथ प्रतस्थे पुरतोऽधिपः । अभ्यमित्रीणतां प्राप नृपः सोऽपि मदोद्धतः ॥ ४३८ ॥
तत आसीन्महायुद्धं कुन्ताकुन्ति गदागदि । सैन्ययोरुभयोः शौर्यावेशादज्ञातघातवान् ॥ ४३९ ॥
तस्मि**न्नुदयनो**ऽपि स्वस्वामिनः[2] पुरतः स्थितः । प्रजह्रे प्रहृतश्चासौ न्यपतद् भूमिमण्डले ॥ ४४० ॥
20 युद्धे जिते हते शत्रौ शोध्यमाने रणे प्रभुः । निरीक्ष्यो**दयनं** श्वासावशेषायुषमूचिवान् ॥ ४४१ ॥
अनित्यो भौतिको देहः स्थिरेण यशसा त्वया । व्यक्रीयत स्फुटं साधु वणिग्व्यवहृतिः कटः[3] ॥ ४४२ ॥
किंचिद् यदस्ति ते चित्ते शल्यं खुरखुरायितम् । ब्रूहि तद् विदधानोऽहं किंचित् ते स्यामृणातिगः ॥ ४४३ ॥
अथ स प्राह नाथ स्मो वयं स्वामिवशाः स्थिताः । तत्कार्यादपरं नैव जानीमोऽनन्यचेतनाः ॥ ४४४ ॥
श्रीमत्**सिद्धा**धिपाद् बिभ्यद् भवद्बन्धुः क्षितीश्वरः । बहुमेकं समीपे मे प्रैषीत् स न्यकृतो मया ॥ ४४५ ॥
25 श्रीमान् **कुमारपालो**ऽपि क्षूणं मयि तदा घनम् । अधारयिष्यदत्युग्रमूरीचक्रे मयापि तत् ॥ ४४६ ॥
इदानीं तु त्वदंह्रीणामग्रेऽसून्[4] मुञ्चतो मम । उभौ लोकौ निजाम्नायः श्रुतं शीलं पवित्रितम् ॥ ४४७ ॥
मृत्यौ विप्रतिसारो नास्माकं विज्ञापयामि तु[5] । किंचिन्मन्नन्दनस्यास्य **वाग्भटा**ख्यस्य कथ्यताम् ॥ ४४८ ॥
**शत्रुञ्जयमहातीर्थे** प्रासादस्य प्रतिश्रुतः[6] । जीर्णोद्धारस्ततः श्रेयोहेतुर्मे स विधीयताम् ॥ ४४९ ॥
ओमित्युक्त्वा ततः **कीर्तिपाले**नाङ्गीकृते तदा । परासुरभवत् तत्र श्रीमा**नुदयनः** शमी ॥ ४५० ॥
30 कृते तत्रानृणो वपुरहं स्यामधुना पुनः । स्वां देवकुलिकामेकां नगरान्तर्व्यधापयम् ॥ ४५१ ॥
तथाऽत्रैव पुरे [7]वासी व्यवहारी महाधनः । श्री**छड्डुक** इत्याख्यः श्रेष्ठी नवतिलक्षकः ॥ ४५२ ॥
मन्मैत्र्या तेन चाकारि धर्मस्थानेऽत्र खत्तकम् । श्रीमत्तत्राजितस्वामिबिम्बं चास्थाप्यतामुना ॥ ४५३ ॥
प्रतिष्ठितं च श्री**हेमसूरि**भिर्ज्ञानभूरिभिः । तदीयहस्तमन्त्राणां माहात्म्यात् सकलं ह्यभूत् ॥ ४५४ ॥

---

1 A °परांभोधिरपि भाग्याधिपः । * पतित एष उत्तरार्द्धः N पुस्तके । 2 A D स्वस्वमिव । 3 N व्यवहृते कट्टः । 4 N तन्मुंचतो । 5 N तत् । 6 N परिश्रुतः । 7 N पुरे वासीद् ।

तत्रोपयाचितं स्वामी चेदिच्छति ततो ध्रुवम्। विजयोऽस्याभिधाऽपीदृगपराजितताकरी ॥ ४५५ ॥
इति विज्ञापनां श्रुत्वा मामकां नायको भुवः। विदधातु विचार्येव ननु प्रभुपुरो मतिः ॥ ४५६ ॥
विज्ञप्तेऽत्रावनीनेता ध्यातामात्यवचःक्रमः। ऊचे मन्त्रिन्! भवद्वाक्यात् कार्यजातं मया स्मृतम् ॥ ४५७ ॥
सखे! शृणु यदा पूर्वं वयं सामान्यवृत्तयः। **स्तम्भतीर्थ**मगच्छाम दिनत्रयमुपोषिताः ॥ ४५८ ॥
**वोसरि**र्वेदुरस्माभिः प्रैष्यतो**दयना**न्तिके। अकृतार्थस्ततश्चागात् तदागः स्फुरितं न मे ॥ ४५९ ॥ 5
एतेऽहो! स्वामिनो भक्ता इति चेतस्यभून्मम। परेषु रोषणः स्वीयाभाग्यदर्शी कृती न सः ॥ ४६० ॥
तथा श्वेताम्बराचार्यो **हेमसूरि**र्मया तदा। प्रदोषसमयेऽदर्शि कल्पद्रुमसमः श्रिया ॥ ४६१ ॥
पाथेयं कृपया किंच न दद्याद् यद्यसौ प्रभुः। राज्यं कः प्राप्स्यदानन्दि भवत्सङ्गमसुन्दरम् ॥ ४६२ ॥
तथा तद्वचनं तथ्यमभूद् दैवतवाक्यवत्। अद्यापि ध्वनति ध्मातघण्टाटङ्कारवद् दृढम् ॥ ४६३ ॥
बिम्बस्यास्य प्रतिष्ठात्[1]व्याजात् स्मारयता गुरुम्। ममोपकृतमत्यर्थं कृतावेदी नराधमः ॥ ४६४ ॥ 10
तथा श्री**सिद्धराजो**ऽपि हत्वा **खंगारभूपति**म्। तज्जातीयबहुत्वेन शक्तो देशं न वासितुम् ॥ ४६५ ॥
इदानीं त्वत्पितुर्बुद्ध्या शत्रवस्ते विनाशिताः। सर्वेऽपि च यथा तेषां नामापि नहि बुध्यते ॥ ४६६ ॥
भुक्तौ न्यक्षेपि देशश्च मुक्तास्तत्राधिकारिणः। ईदृग् धीमान् भवद्वप्ता स्वामिभक्तिफलं हि तत् ॥ ४६७ ॥
**कीर्तिपाल**कुमारोऽसौ पदातिर्विग्रहादिपु। अबुधः सांयुगीनेन त्वत्पित्रैव बुधः कृतः ॥ ४६८ ॥
तीर्थोद्धारश्च सन्दिष्टस्तेन ते तदपीह नः। कार्यं ततोऽधुनैवायमादेशो भवतात् तव ॥ ४६९ ॥ 15
राजकोशात् समादाय धनान्यापूर्णतावधि। पूर्यं तस्य प्रधानस्य स्वस्यास्माकं च वाञ्छितम् ॥ ४७० ॥
इदानीं त्वस्य देवस्य बिम्बं मे दर्शय द्रुतम्। पुण्यैर्लभ्यं समभ्यर्च्य प्रस्थानं[2] कुर्महे ततः ॥ ४७१ ॥
ततः सन्दर्श्यमानाध्वा श्रीमद्**वाग्भट**मन्त्रिणा। संचचालाचलाधीशः प्राप चास्य जिनालयम् ॥ ४७२ ॥
श्रीमन्तं पार्श्वनाथं प्रागानतो मूलनायकम्। ददर्श मन्त्रिणा ख्यातमजितं तदनु प्रभुम् ॥ ४७३ ॥
कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनद्रवैः। सुगन्धकुसुमैश्चार्चां विदधे वासनावशात् ॥ ४७४ ॥ 20
व्यजिज्ञपच्च तीर्थेशं त्वत्प्रभावान्नृपं रिपुम्। अस्मिन्नवसरे नाथ! विजेष्ये त्वत्प्रसादतः ॥ ४७५ ॥
ततो मम भवानेव देवो माता गुरुः पिता। अत्र साक्षी भवान् मन्त्रिन्! पाल्यमेतद्वचो मया ॥–युग्मम्।
इत्युक्त्वाऽऽनम्य तं भूपः पुलकाङ्कितविग्रहः। तदा विजययात्रायै[3] सैन्यानि समवाहयत् ॥ ४७७ ॥
§१७. उपचन्द्रावति प्रायात् प्रयाणैरप्रमाणकैः। आवासान् दापयामास तत्र भूवासवो मुदा ॥ ४७८ ॥
तत्र **विक्रमसिंहो**ऽस्ति राज्ये मुख्य[4]महाधरः। राज्ञः कटकसेवाया निर्विण्णो गमनामनाः ॥ ४७९ ॥ 25
प्रशस्तैः स महामात्यैर्निजैः समममन्त्रयत्। वयं खेदं परं प्राप्ता निर्जीवनृपसेवया ॥ ४८० ॥
कः प्रतापो बलं किं वा भ्रान्तदेशान्तरे नरे। अत्र चित्रपटाजीवे नमस्कारो[5]ऽतिदुष्करः ॥ ४८१ ॥
भस्माधारः पुटीपात्रं जटा मूर्ध्नि शिवार्चनम्। एवं वेषे प्रणामो नः काऽत्र राज्यविडम्बना ॥ ४८२ ॥
तस्मात् कथंचिदत्रैव यद्यसौ साध्यते नृपः। असौ हि शशकः खञ्जो[6] रुणन्निष्पाववाटकम् ॥ ४८३ ॥
कोऽपि चौलुक्य[7]वंशीयः क्षात्रतेजोभिरद्भुतः। राज्ये निवेश्यतेऽस्माकं तदाज्ञां कर्तुमौचिती ॥ ४८४ ॥ 30
प्राहुस्तस्य प्रधानाश्च नोचितं भवतां कुले। स्वामिद्रोहो यतोऽधीश**सिद्धाधिप**पदस्थितः ॥ ४८५ ॥
अस्माकं सर्वथाऽऽराध्यो युद्धेष्वनियतो जयः। दुर्गरोधविशेषेण विमृश्यं तदिदं घनम् ॥ ४८६ ॥
उवाच च कथं वध्यो[8] भूपालोऽसौ भविष्यति। कृतं वोऽ[9]परशिक्षाभिरुपायं वदत ध्रुवम् ॥ ४८७ ॥

---

1 N प्रतिष्ठान°। 2 N प्रयानं। 3 N °यात्रायां। 4 N ऽमुष्यमहाधरः। 5 N चमत्कारो°। 6 A षंढो। 7 A B चौलिक्य°। 8 N बोध्यो। 9 N वो परभिक्षाभि°।

वयं हि तस्य वक्तारः स्वामिना करणे पुनः । प्रमाणं स्वरुचिर्नाथ ! तत्कुरु प्रतिभासितम्[1] ॥ ४८८ ॥
अथाह **विक्रमो** वह्नियन्त्रं प्रकुरुताधुना । मत्सौधेऽसौ यथावश्यमक्लेशेन विनश्यति ॥ ४८९ ॥
[2]व्यचारयन्निमित्तं ते निजावासेऽग्निदीपनम् । प्रागल्भ्यात् कुमतेरेतद्[3] विनाशस्यैव सूचकम् ॥ ४९० ॥
किं च प्रविद्धामोऽत्र दुर्लङ्घ्या भवितव्यता । राज्योच्छेदोऽस्य सम्पन्नो भूपालो विजयी पुनः ॥ ४९१ ॥
5 श्री**सिद्धाधीश**पट्टे यः प्राच्यपुण्यैर्निवेशितः । एतत्सदृशभृत्यानां नासौ योग्यो भविष्यति ॥ ४९२ ॥
एवं विमृश्य तेऽवोचन् हस्तस्पृष्टललाटकाः । स्वाम्यादेशः प्रमाणं नः कार्यो नाऽत्र विचारणा ॥ ४९३ ॥
सूत्रधारैस्ततो भूम्यन्तरा सौधं निवेशितम् । ऊर्ध्वं च स्तम्भपट्टादि चलं वस्त्राञ्चलोपमम् ॥ ४९४ ॥
तस्योपरि प्रतिसीराप्रावारास्तरणास्तृताः । मण्डिता विततोल्लोचाऽवचूलैः पद्मकैस्तथा ॥ ४९५ ॥
मौक्तिकैः कुसुमैर्गुच्छैर्विच्छन्दकशतैरपि । सुन्दरा तत्र शय्या च सूत्रतन्तुमयाऽरचि ॥ ४९६ ॥–युग्मम् ।
10 एकत्र कीलके कृष्टे[4] तत्सर्वं गर्तमन्दिरे । खदिराङ्गारसंपूर्णे भस्मीभवति तत्क्षणात् ॥ ४९७ ॥
एवं निवेद्य ते नेत्रे नेत्रे बाष्पप्लुते दधुः । तन्नायकोऽप्युवाचैवं मतिः कार्यप्रसाधिका ॥ ४९८ ॥
असौ यथा तपस्वीदृक्शय्यायां चङ्गभङ्गिभिः[5] । आक्षिप्ताक्षो निवेश्येत[6] तदास्याधोगते[7] मृतिः ॥ ४९९ ॥
इति प्रातर्विचिन्त्यायमायाच्छिबिरमध्यतः । राजपादान् नमश्चक्रेऽवनीलुठनपूर्वकम् ॥ ५०० ॥
विज्ञो विज्ञपयामास **मारवो** मण्डलेश्वरः । दम्भात् सुधां मुखे बिभ्रद् विषपूर्णो घटो यथा ॥ ५०१ ॥
15 अलंकुरुत हर्म्यं मे प्रसादः क्रियतां प्रभो ! । तत्र प्रत्यवसानेनावसानेनाथ[8] दुःस्थितैः ॥ ५०२ ॥
[9]ध्यात्वेति धीनिधिर्भूपो **मारवे**षु न विश्वसेत् । प्राह नः परिवारः प्राग् भुंक्तामनु वयं ततः ॥ ५०३ ॥
क एवं हि हितान्वेषी स्वामिभक्तश्च दृश्यते । **परमार**कुलोद्भूतं भवन्तमभयं विना ॥ ५०४ ॥
तत्र कः प्रतिषेद्धास्ति शुभे कार्ये महाधर ! । अस्माकं भवदावास एव योग्यो विलोकितुम् ॥ ५०५ ॥
स्वाम्यादेशः प्रमाणं मे इति प्रोच्य परिच्छदम् । भक्तोऽसौ भोजयांचक्रेऽपराह्णावध्यबाधया ॥ ५०६ ॥
20 अङ्गरक्षास्ततः स्वामिमूर्त्तिरक्षासदोद्यताः । आहूतास्तत्समस्तं च कुट्टिमं प्रकटीकृतम् ॥ ५०७ ॥
यत्रासन्नः पुमानेको वृद्धो मतिमतां पतिः । आजिघ्रन् गन्धमत्युग्रं ध्माताङ्गारगणस्य सः ॥ ५०८ ॥
विममर्श निजस्वान्ते विज्ञानं किञ्चिदद्भुतम् । तत्रास्ते वह्निसम्बद्धं प्रभुद्रोहस्य[10] कारणम् ॥ ५०९ ॥
ततस्तं **विक्रमः** साभिप्रायं दृष्टिविकारतः । परिज्ञायातिसच्चक्रे वक्राशयशिरोमणिः ॥ ५१० ॥
ययौ **विक्रमसिंहो**ऽथ सह तेनैव मन्दिरम् । राज्ञः प्राह च मत्सौधे नाथ ! पादोऽवधार्यताम् ॥ ५११ ॥
25 अथ भ्रूसञ्ज्ञया तेन न्यषेधि गमनं प्रति । भूपतिः प्राह तत्त्वं मे समस्तं भोजितं त्वया ॥ ५१२ ॥
वयं तु प्राक्क्रियामायां चिन्ताजागरपीडिताः । अधुनाऽभ्यवहारेषु[11] नाभिलाषुकचेतसः ॥ ५१३ ॥
मुहूर्त्तश्चापि दैवज्ञैः प्रयाणाय विचारितः[12] । संप्रत्येव ततो ढक्का वाद्या प्रस्थीयते यथा ॥ ५१४ ॥
त्वमपि स्वां चमूं सज्जीकृत्य कृत्यविशारद ! । शीघ्रमागच्छ न च्छेका[13] जृम्भायन्ते त्वरायिते[14] ॥ ५१५ ॥
अन्तःशङ्कां वहन्नोमित्युक्त्वा च प्रययौ स्वकम् । धाम ज्ञातमिवायं स्वं विमृशन्[15] चेतसि क्षणम् ॥ ५१६ ॥
30 झटित्येव प्रतस्थे च स्कन्धावारः[16] प्रभोस्तदा । अचिराद् रिपुदुर्गस्योपकण्ठे शिबिरं दधौ ॥ ५१७ ॥
स यथास्थानमातस्थौ शिबिरस्य निवेशनम्[17] । अहर्दिवं प्रहरके जाग्रद्व्यग्रभटोद्धुरम् ॥ ५१८ ॥

---

1 N प्रतिभाषितं । 2 B विचारयन्नि° । 3 N कुमारेतत् । 4 N कुष्टे । 5 B चंगभंगिनः । 6 D निविश्येत । 7 B तदाधोवगतेर्मृतिः । 8 A प्रत्यवसानेनाव्यसनेनाथ; B प्रत्यवसानेनावसीनेनाथ । 9 N ध्यातेति । 10 A प्रभोद्रोहस्य; N प्रभुविद्रोहका° । 11 B °भ्यवहारे तु । 12 N निवेदितः । 13 N तच्छेका । 14 A जृंभायां त्वरितायते; N जंभायंते त्वरायते । 15 A व्यमृशन् । 16 A स्तंभावारप्रभो°; D स्तंधावार°; N स्तंधावाट° । 17 N निकेतनं ।

अर्णोराजोऽप्यजानानः सिद्धकुम्भमवग्रतम् । अवमेनेऽवलेपोमव्याहारोर्मिभिरेव तम् ॥ ५१९ ॥
अत्रैकादश वर्षाणि विजुगोप पदोरवः । ममाथ द्वादशेऽप्यस्तु काऽत्र भूपालकल्पना ॥ ५२० ॥
हतसस्वोद्धृतैर्भीत्या कृत्रिमैरपि दर्शनैः । जीव जीवेति जल्पद्भिर्मतो राजा स्वसेवकैः ॥ ५२१ ॥
तथा चाहडभटः श्रीमत्सिद्धराजस्य पुत्रकः । हयाढकास्वरभ्रान्तहस्ती मामुपतिष्ठते ॥ ५२२ ॥
इत्यनल्पविकल्पैः स यत्नान् नासज्जयत् तदा । दुर्गे स्वर्ग इवासीन उदासीनोऽकुतोभयः ॥ ५२३ ॥ 5
कुन्ततोमरशक्त्याद्यैः पूर्णेष्वट्टालकेष्वपि । विलेभे न भटव्रातं निजभाग्यकदर्थितः ॥ ५२४ ॥
श्रीमान् कुमारपालोऽपि ज्ञात्वेति प्रणिधिव्रजैः । अनीकिनीं निजां दानमानाद्यैः समपूजयत् ॥ ५२५ ॥
गजानां प्रतिमानानि शृङ्खलान् मुकुरांस्तथा । अश्वानां कविका-वल्गा-दाम-पल्ययनानि च ॥ ५२६ ॥
रथानां किंकिणीजालचक्राङ्गयुगशम्बिकाः । योधानां हस्तिका-वीरवलयानि च चन्द्रकान् ॥ ५२७ ॥
सुवर्णरत्नमाणिक्यसूचीमुखमयान्यपि । चतुरङ्गेऽपि सैन्येऽसौ भूषणानि ददौ मुदा ॥ ५२८ ॥—विशेषकम् । 10
रोहणद्रुमकर्पूरकश्मीरजविलेपनैः । स्वयं विलिप्य वक्षांणि भटानां पटुताभृताम् ॥ ५२९ ॥
सहस्रपत्रचांपेयजातीविचिकिलस्रजः । कामं धम्मिल्लमालासु बबन्ध स्वयमीशिता ॥ ५३० ॥—युग्मम् ।
हेमन्तसितपत्राभैः शातकुम्भसमैरसौ । स्कन्धानभ्यर्चयद् योधप्रधानानां प्रमोदतः ॥ ५३१ ॥
सान्धकारे निशीथे च राजा तेजःप्रतापभूः । तानुत्साह्य सुधासध्रीचीभिर्वचनवीचिभिः ॥ ५३२ ॥
चचाल संमदोत्तालकलकेलिकुलावनिः । अतूर्यवक्तनिर्घोषं रहो योगीव निध्वनिः ॥ ५३३ ॥ 15
पर्वताधित्यकाभूमिं गत्वा तूर्यरवान् समम् । व्यस्तारयत् तथा चक्रे भूपः सूकरिकास्तथा ॥ ५३४ ॥
तदा च वाग्भटामात्यस्तेनादिष्टः समानय । आप्रभातात् पंचशतीमार्द्राणां सैरिभत्वचाम् ॥ ५३५ ॥
तेनानीताश्च ताः संवर्म्मिणोऽथ रथमण्डपः[1] । खंडीः प्रपातयामासुस्तन्मध्यस्था[2] भटोत्कटाः ॥ ५३६ ॥
एके च दशनैः खड्गान्युत्पाट्यारुरुहुर्द्रुतम् । प्राकारकपिशीर्षाणि तच्छीर्षाणीव विक्रमात् ॥ ५३७ ॥
व्यद्रवन्नथ तेऽन्तस्था विहिते संप्रसारणे । हस्वीकृताः[3] कुमारेण भूपेनाख्यातवेदिना ॥ ५३८ ॥ 20
विघृत्य गोपुरद्वारं बहिर्निरसरत् प्रगे । अर्णोराजोऽपि तत्राजौ स्वजीवे विगतस्पृहः ॥ ५३९ ॥
वाद्यमानेषु संग्रामतूर्येषु प्रतिशब्दितैः । शब्दाद्वैतं बभूवात्र पक्षयोरुभयोरपि ॥ ५४० ॥
कातराणां तदा तत्र देहाभाशाक्षमानिव[4] । परित्यज्य ययुः प्राणाः पातालं शरणार्थिनः ५४१ ॥
ततः प्रववृते युद्धं खड्गाखड्गि शराशरि । बाहूबाहवि सर्वत्रादृश्यमानजनास्यकम् ॥ ५४२ ॥
शूरसंक्रान्तिकाले च भूधरा असया इव । बहुशः खण्ड्यमानाङ्गा अदृश्यन्त गजेश्वराः ॥ ५४३ ॥ 25
पक्वकूष्माण्डकानीवाखण्ड्यन्तात्र तुरङ्गमाः । शालिपर्पटवद्रथ्याः समचूर्यन्त निर्भरम् ॥ ५४४ ॥
परिपक्त्रिमकालिङ्गवत् पत्तिजठरावलिः । पाटिता तत्र कालेयप्लीहफुप्फुससंकुलाः ॥ ५४५ ॥
विचेरुर्गगने गृध्रा नूनं मांसाभिलाषुकाः । विमानस्थाप्सरो दूता इव प्राणेशसङ्गमे ॥ ५४६ ॥
इत्येवमन्वयख्यातिनामोद्घट्टनपूर्वकम् । युद्धे भवति शान्तासु धूलीषु मदवारिभिः ॥ ५४७ ॥
पट्टवारणयोस्तत्र दन्तादन्ति विलग्नयोः । दृष्टश्चाहडभटो राज्ञाऽरिनिषादितया स्थितः ॥ ५४८ ॥ 30
श्यामलाधोरणस्तत्र हस्तिहक्काभयापहृत् । उत्कील्याच्छपटीं द्विः स कृत्वा तस्य श्रुती प्यधात्[5] ॥५४९॥
ततश्चाहडभटो गर्वाद्धस्तिदन्ते पदं दधौ । यत् कियान् प्रतिमातङ्ग इति चेतसि चिन्तयन् ॥ ५५० ॥
पक्षयोर्गूर्जरेशोऽपि लोचने संन्यवीविशत् । बलं विघटितं सर्वं महाधरमुखं तदा ॥ ५५१ ॥

1 N संवर्म्मिणोथरथमं° । 2 N B °मध्ये तु । 3 N °कृतः । 4 N देह माशाक्षमानि च । 5 A पिधात् ।

शङ्कितेन तदाऽजल्पि श्यामल ! त्वमपीह किम् । भेदितो वारणं पश्चाद् व्यावर्त्तयसि यत्सखे ! ॥५५२॥
स प्राह नाथ ! नो शंक्यं स्वप्नेऽपि त्र्यभेदनम् । निषादी श्यामलः स्वामी गजः कलभकेसरी ॥ ५५३ ॥
पश्चात्क्रमैर्गतो नीचैस्ततः प्रतिगजात् पतन् । शत्रुराज्यस्य सर्वस्वं प्राप्तश्चारुभटस्त्वया ॥ ५५४ ॥
यावदेवं वदत्येष तावद्विषदितो रदौ । अन्तर्द्वयोर्जवात् तत्रापतत् स्वस्वामितेजसा ॥ ५५५ ॥
5 जगृहे तलवर्गीयैः सुभटैः संयतश्च सः । अर्णोराजश्च राज्ञापि कुन्तेन निहतोऽलिके ॥ ५५६ ॥
प्रणाशाभिमुखः कांदिशीकश्चारुभटं विना । व्यावर्त्तयद् गजं सेनाप्यस्य व्याजुघुटे ततः ॥ ५५७ ॥
जितं जितमिति प्रोच्य पटमभ्रमयत् प्रभुः । मन्यमानश्च राजानं स्वं तदा विक्रमोर्जितात् ॥ ५५८ ॥
सामन्ताश्चाययुः सर्वे मंक्षु तं पर्यवारयन् । जितो भवद्भिरेवासावित्यावर्जयदत्र तान् ॥ ५५९ ॥
देशः कोशश्च लुण्टाकैस्तस्य सेनाप्यलुण्ट्यत । सुलक्षणाः सत्त्वहीना युद्धे पृष्ठप्रदायिनः ॥ ५६० ॥
10 ततश्चमूचराः सर्वे तदीयद्रविणैर्धनैः । स्वयं ग्रहणतोऽतृप्यन्नासप्तपुरुषावधि ॥ ५६१ ॥
जितकाशी ततो भूपो न्यवर्त्तत पुरं प्रति । यच्छन् यथार्थनं दानमर्थिभ्यः कल्पवृक्षवत् ॥ ५६२ ॥
§ १८. अष्टादशशतीदेशप्रत्ययपत्तनमासदत् । पूर्ववत् वृत्तमत्युग्रं तदीशस्याप्यबुध्यत[1] ॥ ५६३ ॥
नृपतिर्विजये सौविदल्लान् महानथादिशत् । ततो निमन्त्रणायातः पश्चाद्बाहुर्न्ययन्त्र्यत ॥ ५६४ ॥
प्रेष्य प्रेष्यान् निजांस्तस्य मन्दिरं मन्दुरावरम् । अज्वालयत् क्षणादेव यथाभवदसत्सदृक्[2] ॥ ५६५ ॥
15 शकटेऽनास्तृते[3] क्षिप्तः स्वस्थानाचालिताङ्गकः । हुंकारेऽप्यन्[4]लंभूष्णुः सोऽभूत् का वचने कथा ॥ ५६६ ॥
नद्युत्तारेषु पाषाणोद्घाटसंकटभूमिषु । अभूदसृग्विलिप्ताक्षः स षट्कारस्फुरच्छिराः ॥ ५६७ ॥
परमारान्वये राजपुत्रैरुत्तार्य भूपतिः । सम्यक्प्रणम्य विज्ञप्तोऽन्वमन्यत [5]तृणास्तुतिम् ॥ ५६८ ॥
मञ्चातिमञ्चकलितमुत्तुङ्गकृतवतोरणम् । अणहिल्लपुरं प्राप क्ष्मापः प्राप्तजयोदयः ॥ ५६९ ॥
महोत्सवे प्रवेशस्य गजारूढः सुरेन्द्रवत् । वाग्भटस्य विहारं स ददर्श दृग्रसायनम् ॥ ५७० ॥
20 तत्र प्रविश्य श्रीमन्तमजितस्वामिनं नृपः । आर्चयत् सुरभिद्रव्यैरत्यासन्नोपकारिणम् ॥ ५७१ ॥
श्रीपार्श्वमथ च स्मृत्वा संपूज्य च ततोऽवदत् । प्रागुक्तं यन्मया नाथ ! तत्तथैवावधार्यताम् ॥ ५७२ ॥
ततः प्रणम्य सोत्कण्ठं कण्ठीरववरासने । पट्टकुञ्जरकुम्भस्थे स्थितोऽगाद् भूभृदालयम् ॥ ५७३ ॥
गोत्रवृद्धाङ्गनावर्गसङ्गीतस्फुटमङ्गलः । प्रतीच्छन् शिरसा वर्द्धापनान्यनुबभूव सः ॥ ५७४ ॥
ततो विक्रमसिंहस्य स्थाने सन्धीन्निवेश्य च । आनाय्यानतिदूरे तं [6]भूपालः प्राह सस्मितः ॥ ५७५ ॥
25 भो विक्रमाप्रियत्वेण भूपाला एव पञ्चताम् । प्रायान्ति नैव सामन्ता इति त्वं केन शिक्षितः ॥ ५७६ ॥
तत्रैव यद्यहं त्वां भो ! वह्नौ होता ततो भवान् । भस्मीभूतः क दृश्येत सपुत्रपशुबान्धवः ॥ ५७७ ॥
यादृशाश्च भवन्तः स्युर्गृहकर्मकरा मम । मलिना न वयं नाथास्तादृशास्तदसून् वह ॥ ५७८ ॥
अक्षेपि बंदिशालायां ततोऽसौ निजकर्मतः । इह लोके हि भोज्यन्ते राजभिस्तामसास्तमः ॥ ५७९ ॥
तथा श्रीरामदेवाख्य[7]तद्भ्रातुर्नन्दनं नृपः । श्रीयशोधवलं चन्द्रावत्यामेष न्यवीविशत् ॥ ५८० ॥

*

30 § १९. अन्येद्युर्वाग्भटामात्यं धर्मात्यन्तिकवासनः । अपृच्छदार्हताचारोपदेष्टारं गुरुं नृपः ॥ ५८१ ॥
सूरेः श्रीहेमचन्द्रस्य गुणगौरवसौरभम् । आख्यदक्षामविद्यौघमध्यामोपशमश्रियम्[8] ॥ ५८२ ॥
शीघ्रमाहूयतामुक्तो राज्ञा वाग्भटमन्त्रिणा । राजवेश्मन्यनीयन्त सूरयो बहुमानतः ॥ ५८३ ॥

---

1 N °प्यबुध्य ते । 2 N B सकृत् । 3 N शाकटेनास्तृतिं । 4 N हुंकारेणान° । 5 N त्वमुन्मत्ततृणां स्तुतिम् । 6 N तां भूपालं । 7 N °रामदेवाख्यं । 8 N °श्रामाश्रयम् ।

